## ४ अर्जुनभ्रमनिरासः ।

ये महाभारतेतिहासाज्ञातिनस्ते निश्चिन्वन्त्येवैतत्ततो न श्रीकृष्णो न च पाण्डवा वेदोपवेदस्मृतिवेदान्तशब्दशास्त्राद्यध्ययनज्ञाने नियमपूर्वकं गुरोर्न व्यधुर्न च दधुरिति। यो महाभारतीयमहायुद्धक्षेत्रे सन्निकृष्ट एव युद्धसमयेऽध्यात्मविज्ञानं क्षात्रं धर्मं चार्जुनमशात् स श्रीकृष्णो यं च सोऽशिषत् सोऽर्जुनोऽपि सर्वज्ञानसम्पदुपेतौ बभूवतुः। किन्तूभये देवमनुष्या विद्वांसोऽपि मायापिहितबुद्धिविभवा भवन्त्येव तादृशेष्ववसरेषु। सर्वत्रैव दृष्टप्रभावमिममेव नियममनुसृत्य युद्धे स्वजनवधोऽर्जुनमभाययद् व्यरमयच्च तं युद्धात्। यतस्तेन युयुत्सवः पुरोऽवस्थिताः सदाऽर्हिता अर्हणीयाश्च गुरवो यैः सह शैशवे तेन क्रीडादिसुखमनुभूतं ते भ्रातरः सुहृदश्चान्ये प्रणयिनो दृष्टाः। एते मया गाण्डीवधनुर्मुक्तैः शरैर्हन्तव्या भविष्यन्त्यस्मिन्युद्धेऽकृते चैवं न मे राज्यलाभसम्भव इति विचारस्तं विरतोद्यममकरोत्। एतत्तु नैवाविदितं कस्यापि यदर्जुनः सर्वशास्त्रवित्सर्वबलनिराकरिष्णुर्वीरश्चासीत्किन्तु मानवस्वभावसुलभां योगिमात्रापास्तां मनोदुर्बलतां हातुं नाशकत्। अतो नैसर्गिकमेवैतत्तस्य प्रणयाभिभूतमनसस्तदाऽभूद्युद्धविरिरंसा। ततस्तस्य वीरत्वं क्षत्रत्वं च प्रेम्णा पिहिते आस्ताम्। यं क्षात्रधर्मं तदाऽसौ व्यस्मरत्तं श्रीकृष्णस्तस्य मनसि पुनरुदभावयत्। तस्य मनसि च तदा योद्धव्यमेव मयेति निश्चापयत्।

भगवतः श्रीकृष्णस्योपदेशो यद्यपि न बहुं विस्तरं दधाति तथापि वेदब्राह्मणोपनिषन्मीमांसास्मृत्यादिशास्त्रनिष्कर्ष

भूतो वर्तते। यथा जगज्जनन्या जह्नुजाया आकृष्य एकाल्पा कुल्या गङ्गाजलोपयोगफलदा तथैव वेदादिधर्मग्रन्थापारपारावारात्संक्षिप्तगृहीता गीतापि तत्तद्ग्रन्थोपयोगफलदात्रीति नानुचितम्। इदमेवंरूपमलौकिकतपःप्रभावस्य महर्षेर्वेदव्यासस्य महिमफलं यदस्माकमभ्युदयनिःश्रेयसकर्ताऽयं ग्रन्थो विद्यते।

## ६ श्रीकृष्णस्य योगशक्तिः।

यदि नाम तथा संशयारूढानेकजीविताद्दोदृशाद्युद्धादर्जुनः पराङ्मुखोभविष्यत्तर्हि स कृष्णश्चोभौ जगति वाच्यमगमिष्यतामुपहास्यतां च। महती सा संकटावस्थाऽभविष्यत्। यतः पाण्डवानां च नियतिः शाश्वते दुर्गतत्वे पतिताऽभविष्यत्। अस्मिन्नवसरे भाविनीमापदमपाकर्तुं श्रीकृष्णस्य साहाय्यमर्जुनेन प्रार्थ्यत। पाण्डवानां दौत्यमाचरन् भगवान्कृष्णो राज्यस्यार्धं पाण्डवेभ्यो दातुं दुर्योधनं न्यवेदयत्। तत्र दुर्योधनस्यामृदुमनस्त्वात् तस्य सर्वएव प्रयत्ना नैष्फल्ये पर्यणमन्। तथ्यं त्विदमासीद्यच्छ्रीकृष्णः सन्धिं नैवैच्छत्। महत्यामनेकगुरुसम्बन्धिराजाद्युपस्थितिमत्यां राजसंसदि लब्धदुःसहपरिभवाया द्रौपद्या वचांसि पापकर्मप्रतिफलदानावधि श्रीकृष्णस्य मनसि दुर्वहभारतुल्यान्यबोभूवन्। सन्धौ जाते तदन्यदुष्करदेश्या दुर्योधनमारणप्रतिज्ञाप्यपूर्णा समभविष्यत्। श्रीकृष्णस्तु न केवलं सर्वसम्पदः स्वां मन्यमानान् धार्तराष्ट्रान् किन्तु बलगर्वायास्तन्याय्यकर्मणोऽन्यानपि बहून् राज्ञो नाशयितुं युद्धमेवाचोकमत। यतो बहुभ्यस्तेभ्योऽबिभेदिव सः। श्रीकृष्णेच्छाप्रयत्नयोरमोघत्वाद्युद्धेऽवश्यं भावितां भजति महत्यौ सेने

उभयोः पक्षयोः कुरुक्षेत्रे समगमताम्। स्वां प्रतिज्ञामनुसृत्य श्रीकृष्णोऽर्जुनस्य सूतासनमलमकरोत्। सोर्जुनस्य रथं प्रारिप्सितयुद्धावनिं निनाय। नाजानन्नपि स्वप्रतीपयोधिनोऽर्जुनस्तत्र गुर्वादीन्स्वशस्त्रपातविषयीभविष्यतो विलोक्य महान्तं विषादमन्वभवत्। ततस्त्यक्तसंपरायोत्साहं घ्नतोपि गुर्वादीन् न जिघांसन्तमर्जुनं युद्धायोद्यतं कर्तुं नैवासीत्सुकरम्। तद्दुष्करतमं कर्म कृष्णस्यैव कर्तव्यतायामापतितम्। क्षात्रधर्मोपदेशमन्तरेण च न तदभवत्सम्भवम्। तदा दुष्करविधेयमवसरानीतं श्रीकृष्णस्य न केवलं सर्वशास्त्रज्ञानसनाथमुपदेष्टृत्वं किन्तु बुद्धेरप्रतिमत्वं योगशक्तिं चापैक्षत। यतस्तेनार्जुनस्य जगन्मायोद्भवो मोहो निरस्तस्तत्कृतानेकसंशयच्छेदश्च विधातव्यावास्ताम्। ततश्च श्रीकृष्णो गीतापराभिधं सुफलविधित्सितं ज्ञानमर्जुनमुपादिशत्। तस्मिन्नुपदेशे तस्याखिलशास्त्राधीति बोधयोगशक्तयस्तेनोपायुज्यन्त। ततः कृष्णोपदेश ईप्सितफलावहोऽभवदितिहासप्रसिद्धमेव। स गीतोपदेशश्च कतिपयैरेवाहोभिः कृष्णार्जुनाभ्यामुभाभ्यामपि व्यस्मारि। यतो युद्धात्परं यदा युधिष्ठिरोऽश्वमेधयज्ञारंभप्रवृत्तस्तदा सदोगृहंगतोऽर्जुनो द्वारिकां प्रति जिगमिषन्तं श्रीकृष्णमिदमवोचत्।

"विदितं ते महाबाहो संग्रामे समुपस्थिते ॥
माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरम् ॥
यत्तद्भगवता प्रोक्तं पुरा केशव सौहृदात् ॥
तत्सर्वं पुरुषव्याघ्र नष्टं मे भ्रष्टचेतसः ॥

मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः ॥
भवांस्तु द्वारिकां गन्ता न चिरादिव माधव ॥"

ततः श्रीकृष्णः प्रत्यवदत् ।

"श्रावितस्त्वं महागुह्यं ज्ञापितश्च सनातनम् ॥
धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥
अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम् ॥
न च साद्यपुनर्भूयः स्मृतिर्मे संभविष्यति ॥
नूनमश्रद्दधानोसि दुर्मेधा ह्यसि पाण्डव ॥
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥"

(श्री महाभारत आश्वमेधिकपर्वणि
षोडशोऽध्याये)

योऽयं गीतोपदेशः कृष्णेनार्जुनेन च विस्मृत आसीत्स भगवता श्री व्यासमहर्षिणा निजया परया योगशक्त्या स्वस्मृतिमानीतः पद्यत्वमापाद्यत च । ततश्चैतत्सस्यगेवानुमीयते तस्य योगशक्तिस्तु कृष्णस्याप्यत्यशयिष्ट ।

श्रीकृष्णः पाण्डवाश्च महाभारतीयाद्युद्धात्परं षड्त्तराणि त्रिंशद्वर्षाण्यजीवन् । यदि नाम जीवत्सु कृष्णपाण्डवेषु गीतेयं भगवता व्यासमहर्षिणा निबद्धाऽभविष्यत्तर्हि तेऽनल्पं सन्तोषमवाप्स्यन् । यतस्तादृशोऽद्भुत एवायं ग्रन्थः । न केवलमियं गीता किन्तु सकलमेव महाभारतं व्यासस्याप्रतिमाया निगूढयोगशक्तेर्दुर्बोधगभीरधर्मज्ञतायाः प्रत्यक्षं फलम् ।

कतिपये पुरुषा एवं मन्यन्ते यत्सम्प्रति लभ्यमाना छन्दोनिबद्धा या गीता सैव (छन्दोमय्येव) तच्छ्रीकृष्णमुखपद्मच्युतमलौकिकसौरभसम्पत्सनाथममृतप्रत्यादेशि मधु। तच्च तेषां महाभारतानवबोधमुपपत्तिराहित्यं च सेमुष्या ज्ञापयति। यतः कृष्णेन युद्धक्षेत्रे तथैवोपदिष्टमासीद्यथा मनुष्याणां वाग्विनिमयोऽकृत्रिमव्याहाराद्भवति। वाग्विनिमयो वोक्तिप्रत्युक्ती वा कृष्णार्जुनयोस्तदानींतने संस्कृते प्राकृते वा यथाप्राप्ते ऽभूतामिति निश्चितमेव। ततोऽतीते कियत्यपि काले सर्वं महाभारतं पद्यतां नीतवता श्रीव्यासेनायं कृष्णार्जुनसंवादोपि तदन्तर्वर्त्तित्वात्पद्यतां नीतः। स च संवादो गीतेत्यभ्यधायि।

## ६ महाभारतकाले महर्षेर्व्यासस्य वयः।

सत्यवतीत्यपरं नाम दधत्यां योजनगन्धायामुत्पन्नो व्यासमहर्षिः पराशरस्य महर्षेः पुत्रो ब्राह्मणाग्र्योऽभवत्। सैवेयं सत्यवती या व्यासस्य जन्मनः परं शन्तनो राजर्षेः पाणिगृहीती महिषी बभूव। विचित्रवीर्यचित्राङ्गदौ द्वौ पुत्रौ ततः प्रासोष्ट। उभावपि शान्तनवौ सत्यवतीसुतौ यौवनारम्भे दायभाजमनुत्पाद्यैव लोकान्तरमयाताम्। ततो वंशपरम्परानुच्छेदाय सत्यवती तस्याः सापत्नेयो भीष्मश्च धर्मशास्त्रमनुसृत्य कस्मादपि ब्राह्मणात्क्षेत्रजं दायहरमुत्पादयितुं चकमाते यतोऽयं धर्मनियमस्तदा व्यवहारसहोऽभवत्। ततश्च सर्वापेक्षितगुणो भगवान् व्यास आहूतः। तस्य वयस्तदा पञ्चषष्टिवत्सरमितं नूनमभवदित्यनुमानलभ्यं भवति। कथमेतदनुमातुं शक्यत इत्यत्रोच्यते। यदा भगवान् व्यासो जनिमलभत तदा सत्यवती त्रयस्त्रिंशद्वर्षा

भवेत्। पंचत्रिंशद्धायना च सा शन्तनुपत्नी भवेत्। ततस्त-स्या द्वौ पुत्रौ बभूवतुर्यौवनं चाभजताम्। तत इदमनुमीयते व्यासे विचित्रवीर्यपत्न्यां वंश्यसन्तानाय नियोजिते नूनं सत्य-वत्या वयः पञ्चोनशतवत्सरमितमभूदिति।

## ७ :महाभारतकाले वयोऽवधिः।

बहून्यूहरणानि पुरःस्थापयितुं शक्यन्ते यैर्महाभारतकाले सपादशतवर्षमितं सार्धशतवर्षमितं ततोप्यधिकं वा मानवं सामान्यं वयोऽवर्ततेति दृष्टं बोभवीति। पाण्डुर्विचित्रवीर्यस्य ज्यायांस्तनयः। दीर्घासाध्यरोगाक्रान्तत्वान्नासौ राज्यासनार्होऽ-मन्यत। सप्ततिहायनश्च स स्वरयात्। पाण्डोर्जन्मनस्त्रिचतुरे-ष्वेव मासेषु गतेषु धृतराष्ट्रोऽजनि यत उभयोर्मातरावेकस्मि-न्नेव वत्सरे गर्भं हितवत्यौ। पाण्डोः स्वप्रयाणात्परं चतुर्विं-शत्युत्तरैकशतवर्षमितेऽनेहसि व्यतीते महाभारतीयं युद्धं प्रावर्तत। ततश्च तदा धृतराष्ट्रः पंचषष्ठ्युत्तरैकशतहायनः सम्भवति। एतेनान्यैश्चाख्यानैर्महाभारतसमये मानवानां द्राघिष्ठमायुस्त्रिंश-दुत्तरशतद्वयमितमासीदिति प्रमातुं पार्यते। यतो भीष्मो व्यासाद्बहु ज्यायानभवत्। श्रीकृष्णस्य पितरं वसुदेवं प्रति कंसस्य परिभवप्रतिनिधीनि वाक्यानि देवक्या विवाहकाले यानि महाभारतहरिवंशादिषु दृश्यन्ते तानि वसुदेवं परिभुक्त-दीर्घवयसं ज्ञापयन्ति। महाभारतादिभ्य एवैतदपि सम्यगवग-म्यते यत्स कृष्णश्च पंचविंशत्युत्तरैकशतशरन्मिते वयसि स्वजीविताभिनयमुपसमहरत्। यदि सप्ततिहायनो वसुदेवो देवकीं पर्यणैषीत्तर्हि श्रीकृष्णस्य सर्वदृश्यदेहविरामसमये पञ्च-नवत्युत्तरैकशतहायनः स समभवत्। देवकी च तदा नूनं

सार्धशतहायनाऽभवत् । तदा हि केवले वा पञ्चोत्तरे वा सप्ततिवर्षमिते वयसि पुमांसः स्त्रियश्च सन्तत्युपादनक्षमाः पूर्णबलाविकसितबुद्धिबलविभवा आसन् । यतोऽर्जुनस्य पादोनशतवत्सरमिते वयसि श्रीकृष्णस्य स्वसरि सुभद्रायामभिमन्युर्जज्ञे । यदा स महाभारतीये युद्धे घातितस्तदा तस्य वयः षोडशवर्षमितमभवत् । तस्य पितुरर्जुनस्य च वयो नवतेर्वर्षेभ्योऽधिकमवर्तत । तादृशे कौमारे वयस्यपि सोऽभिमन्युर्महतां वीराणां बलवतां च भावात्सर्वथाऽनूनतां स्वामदर्शयच्चरमस्यामपि श्वासक्रियायाम् । एतदपि महाभारतादवगम्यत एव यन्न केवलमीषदूनशतवर्षमितायुषः पाण्डवा एव पूर्णविक्रमा अयुध्यन्त किन्तु बहूनामन्येषामपि नामान्युदाहर्तुं शक्यन्ते ये द्विशतवर्षायुषः पञ्चशतवर्षायुषश्चायुध्यन्त न च तेषां शौर्यं बलं च युवभ्योऽल्पतरमासीत् । बहुवीरजीवितान्तकृद्युद्धं समाप्य भीमो धृतराष्ट्रमुपाययौ । स च पुत्रशतनिधनोद्भूतक्रोधाश्रयाद्दह्यमानवृद्धदेहः प्रणयाश्लेषापदेशेन भीमदेहं चूर्णीकर्तुमैच्छत् । विदितधृतराष्ट्रचिकीर्षितेन भीमं तस्मात्त्रिासता श्रीकृष्णेन भीमस्यायसीं प्रतिकृतिं धृतराष्ट्रो ग्राहितः । सोऽन्धो वृद्धस्तां प्रतिकृतिं खण्डशश्चकार । एतेन पञ्चषष्ठ्युत्तरशतहायनस्यापि धृतराष्ट्रस्य बलातिरेकोऽनून इति निश्चीयते । कृष्णो व्याधशराघातान्निधनमापत् । स्वकुटुम्बनाशोद्भवमनस्तापमसहमानः कृष्णस्य पिता वसुदेवो योगेन तनुं तत्याज । तस्य देहेन सहैव देवकी स्वतनुमग्निसादकरोत् । पाण्डवाश्च राज्यं विहाय हिमालयं गत्वाऽन्तमलभन्त । यदि नाम ते तथाऽऽकस्मिकं मृत्युं नावाप्स्यंस्तर्हि ततः परमपि चिरमजीविष्यन् ।

## ८ महर्षेर्व्यासस्य महत्त्वं निगूढसर्वज्ञत्वं च ।

महर्षिर्व्यासो यमनियमादिसम्पद्भिः शाश्वतममृतत्वमविन्दतेति पुराणादिधर्मग्रन्थाः प्रकटयन्ति । तस्मात्पूर्वं परं च तादृशो न कोपि जगत्यजनि । यतस्तस्य महिमा सर्वेषामेव माहात्म्यं प्रत्यादिशति । स स्वयोगशक्त्याऽन्यन्नवं जगन्निर्मातुमपि शशाक । अतीतं सद्भविष्यच्च हस्तामलकमिव विदन् स आस । विदूरस्थोपि संजयः साक्षाद्दृष्ट्वा श्रुत्वेव च धृतराष्ट्राय युद्धप्रवृत्तेर्यदवोचत्तच्छ्रीव्यासप्रदत्ताया अलोकसामान्याया दिव्यदृष्टिशक्तेः फलम् । तस्यैव योगप्रभावेणान्धोऽपि धृतराष्ट्रः शतेन पुत्रैः परेतैः सहालपितुं तान्द्रष्टुं च प्राभवत् । नैतदेवकिन्तु युद्धे मृतानां सम्बन्धिनो मातरः पितरः पत्न्यो भ्रातरः स्वसारः सुहृदश्च साक्षाद्भौतिकेन देहेन विद्यमानैः स्वैः सह समग्रां रात्रिमालप्य दुर्वहं शोकभरं यल्लघूचक्रुस्तद्व्यासकृपाशक्तिविलसितमासीत् । येच तेनापि शोकं शिथिलयितुमक्षमास्ते पुनर्देहत्यागं विनापि लोकान्तरस्थानां स्वानां सांनिध्यं व्यासयोगबलेनैवापुः । यदि महाभारतं सम्यगालोच्येत तर्हिअन्यान्यपि बहून्युदाहरणानि महर्षेर्व्यासस्य धर्मसर्वज्ञतारूपाणां योगशक्तीनामुपलब्धानि भवेयुः । एतत्तु पूर्वमुक्तमेव यद्गीताज्ञानमुक्तश्रुतमपि कालेऽतीते कृष्णार्जुनयोः स्मृती धर्तुं नाशकतां तच्छ्रीव्यासः स्वशक्त्याऽस्माकं पुरोऽतिष्ठिपत् । नैव विस्मयेत एतद्यन्मानवानां मनोमोहापगमनोपकरणभूतमुत्साहसुखकारि मोक्षदं च गीताज्ञानं यदस्माकं पुरो बर्तते तत्तस्यैव महर्षे योगप्रभावदयाफलम् ।

## ९ कतिश्लोका व्यासेन गीताया निबद्धाः ।

सम्प्रति लभ्यमानायां गीतायां श्लोकानां सप्तशती विद्यते किन्तु नेदं गीताया वास्तविकं मानम् । यतस्तावती गीता न तावती । भगवता श्रीव्यासेन गीतामानमधिकृत्य यदुक्तं तेनाप्यस्य निर्णयो विधातुं शक्यः ।

तद्यथा—

" षट्शतानि सविंशानि श्लोकानां प्राह केशवः ।
अर्जुनः सप्तपंचाशत् सप्तषष्टिं च सञ्जयः ॥
धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते ॥ "

( भी० प० अ० ४३ श्लो० ७ )

किन्तु सम्प्रति प्रचलितायां सप्तशतश्लोकात्मिकायां ५७५ श्लोकाः कृष्णोक्ताः, ४० अर्जुनोक्ताः, ८४ संजयोक्ताः एकश्च श्लोको धृतराष्ट्रोक्त इति दृश्यते । ततश्च ४५ श्लोकविकलामेव गीतां वयं पापठ्यामहे । यैर्विद्वद्भिर्महाभारतः सुधीदृष्ट्याऽधितो नैतत्ते प्रत्याख्यातुमीशाः । पंचाशत्षष्टिवा विदुषो विहायेमं संशयमुत्थापयितुं समाधातुं ततश्च नृन् गीतामानविषये विश्वासयितुं न कोपि यत्नमधात् । अन्यत्र शुद्धपाठाद्यन्वेषणचणा अपि विद्वांसो बहोः कालात् ७०० श्लोकात्मिकां गीतां पूर्णामेव मन्यमाना अत्र मौनं भजन्ते ।

## १० कथमद्य प्रचलिताया गीताया अपूर्णताऽजनि ।

गीतायां निर्मितायां पञ्चसहस्रमिताः शरदोत्यगुस्ततश्चास्मिन्देशे धर्मराजपरिवर्त्तनक्रान्तयोऽन्याश्च विपदः काले काले आर्याः समन्वभूवन् । अङ्कितानां ग्रन्थानां जीर्णत्वात्कृमिभुक्त-

त्वाल्लिपिकरावोधप्रमादाभ्यां चानेकसंशोधकहस्तगतत्वाच्च प्रतिलिपीनां भिन्नरुचिवुधकृतकारितत्त्वाच्च लोके स्वसम्प्रदायादिपक्षपाताच्चान्येभ्योऽपि हेतुभ्यो वास्तविको गीतापाठो विकृतिमापत् । एवमपि प्रमाणीभवति यच्छतानि पाठक्रमादिभेदानामस्या गीताया अद्याभूवन् । एवमवस्थितेऽपि प्राचीनतमा हस्ताङ्किता ये गीता ग्रन्था अद्योपलभ्यन्ते ते व्यासोक्तं कृष्णवचोऽद्य प्रचलितां गीतायामपूर्णमिति दर्शयन्त्येव ।

पंचचत्वारिंशदुत्तरसप्तशतश्लोकात्मिकाया अपि गीताया वहूनि भाष्याण्यभूवन् । श्री शङ्कराचार्यात्पूर्वं गीता भाष्याण्यासन्निति तद्भाष्यादेवावगम्यते । वयं त्वेतदपि प्रतीमो यत् ७४५ श्लोकात्मिकायाः समूलानि भाष्याणि हस्तलिखितपुस्तकालयेष्वन्यत्र वा वहुभिरज्ञातानि भविष्यन्ति । यतोऽद्यापि सहस्राधिकेषु वर्षेषु यातेषु यानि प्राचीनानि भाष्याणि लभ्यन्ते तेषु महामहेश्वराचार्यराजानकाभिनवगुप्तस्य गीतार्थसङ्ग्रहो राजानकरामकवेः सर्वतोभद्र इतीमे द्वे उल्लेखमर्हतः । उभे अपि ते काश्मीरपाठ इत्यभिधीयेते । पुण्यपत्तनतोऽपि तादृशं मूलमात्रमेकं पुस्तकं मुद्रितम् । किन्तु तादृशपुस्तकान्वेषणे समीक्षकाणां विदुषां न महान् यत्नः । न च बहवो यत्नवन्तः। कृतेऽत्र यत्ने श्री शङ्करात्पूर्वं विद्यमानानां गीतापाठानां तेषामेव भाष्याणां च नासंभवोपलब्धिरिति निश्चितमेव ॥

मुहम्मदीयानां सम्राजां समयेऽर्वभाषायां पर्शुभाषायां चानूदिता गीतोपनिषदश्च वहुत्र लालभ्यन्ते । ततोऽपि गीतायाः ७४५ श्लोकात्मकत्वं प्रमाणीभवति । अतो गीतायाः ७४५ श्लोकात्मकत्वं सिद्धम् ।

सम्प्रति प्रचलितायां गीतायां ५७५ श्लोकाः कृष्णोक्ताः सन्ति । श्रीव्यासवचोऽनुसारं ते ६२० भवितुं युज्यन्ते । अतः ४५ श्लोकाः कृष्णोक्ता एवास्यामपेक्ष्यन्ते ।

## ११ गीताया हस्तलिखितपुस्तकानां समाहरणं समीक्षणं च तस्याः पाठापूर्णतामपाकर्तुमावश्यके ।

श्रीगीतापराख्योऽयं श्रीकृष्णार्जुनसंवादो यत्र यत्र वेदान्तग्रन्थटीकासूद्धृतो यांश्च ग्रन्थानाश्रित्य श्रीकृष्णः स्वविवक्षितं व्याख्यत् , तानालोच्याप्रचलितो गीतापाठः पूरयितुं संभाव्यते । एतद्विधातुं प्राचीनानां वेदान्तादिग्रन्थानां ( गीतायाश्च ) भाष्यादीनां हस्तलेखाः संगृहीताः समीक्षिताश्च भवेयुः । ते ग्रन्थाः संस्कृते प्राकृतेऽवंपर्शुवाङ्मययोर्वा स्युरुद्दिष्टं न साधयिष्यन्तीति न । ये विषया गीतायामुक्तास्तेषां यत्र यत्र सम्बन्धस्तद्वाङ्मयमन्वेष्टव्यम् । तत्र लब्धाः पाठाः संवादयितव्याः । अस्माभिर्लब्धेऽधिके पाठे यद्यदुपनिषन्मन्त्रैः संवदति यावच्च तच्छब्दार्थसंवादसमन्वयावपि नोपेक्ष्यौ । एवमपि गीताया अपूर्णताऽधिकांशं निरस्ता पाठभेदाश्च शोधिता भवितुं शक्नुवन्ति । तेन जनता गीताया वास्तविकं पाठं सविश्वासं ज्ञापिता भवेत्तस्याश्च ७०० श्लोकानेव शरीरभूतान् मन्यमानानां विश्वासः शिथिलितो भवेत् । एवं कर्तुं कतिपये विद्वांसः सम्प्रति यतन्ते किन्तु न च ते बहवो न च तेषां यत्ना दृढाः ।

अद्य प्रचलितो गीतापाठो ,यद्यप्यपूर्णो बहुधा भिन्नश्च तथापि मन्त्रेणेव मोहयति सर्वं जगत् । गीतासमादरपरा विद्वांसोऽनुमिमतां यदयं ग्रन्थः शुद्धाविकलपूर्णपाठो यदा लब्धा

तदा कियज्जगदुपकरिष्यतीति । गीतापाठस्य विकलतां पश्यन्तः प्रायः सर्वेऽपि भारतीया विद्वांसस्तत्पाठशोधनं विकलमूलपूरणं चाधर्ममिव मन्यन्ते । सहस्रद्वयमितेभ्यो वत्सरेभ्यः केनापि विदुषेमं विषयमधिकृत्य संशयोत्थापननिराकरणयोर्न मेधा नियोजिता । यतोऽचर्यतमेन भगवता श्रीशंकराचार्येण विहिते भाष्ये ततस्तन्मतः पाठ एव सर्वानन्यपाठान्वेषणेऽलसांस्तेनैव तुष्टांश्चाकरोत् ।

सम्प्रति ग्रन्थपाठान्वेषणादिनिहितानेकविद्वन्मानसः कालोऽस्ति । येच गीतापाठमेव स्वधर्मसर्वस्वममन्यन्त न च पाठपरिवर्त्तनाद्यसहन्त तेऽप्यद्यापेक्षितं गीतापाठं पूरयितुं कामयन्ते । अतोऽद्यैतत्पाठपूरणं मानवसमाजमतीवोपकरिष्यतीति । निश्चितमेव । ईदृशी प्रवृत्तिश्च पाठाद्यन्वेषणनिर्णयविधायिनो विदुषः प्रोत्साहयति ।

## १२ नानासम्प्रदायपोषणपराणि गीताव्याख्यानानि ।

भारतव्याप्तनानासम्प्रदायपोषणपरैः श्रीगीताव्याख्यानैः पाठाद्यन्वेषणमनोद्वाराणि प्रायः संवृतानीव । अनेके ह्याचार्याः प्रस्थानत्रयीति समस्ताभिधानामुपनिषद्ब्रह्मसूत्रगीतानामध्यात्मज्ञानपराणि व्याख्यानानि निर्ममिरे । तैश्च ते स्वसिद्धान्तान्पुपुषुः प्रमाणीचक्रुश्च । एतादृशी मनःप्रवृत्तिः श्रीशङ्कराचार्यकालात्तन्मतानुयायिनामेव प्रथममजनि । ततः पूर्वं ये भाष्यकृतस्तेषां लक्ष्यमन्यदेवाऽभवत् । ते सम्प्रदायादिपक्षपातापेतास्तथा गीतां व्याख्यन्यथा न केवलं गीतार्थो जनतया व्यज्ञायत किन्तु व्याख्यातॄणां स्वार्थलवोऽपि तत्र न दृश्यते । भगवता

शङ्कराचार्येण बहूनामीदृशानां व्याख्यातॄणां क्वापि प्रत्याख्यानं क्वापि स्वीकरणं विहितम् । तदेतत्सर्वं प्रमाणीकरोति ।

कतिपये व्याख्यातारः स्वमतपोषणाकर्षणोपयोगं गीताया व्यदधुः । द्वैताद्वैतविशिष्टाद्वैतादिभक्तिवैराग्याणामन्यतममेव पृथक् तेषां मते गीतार्थनिश्चयः । एकस्मादन्यद्व्याख्यानं भेदमेतीति तु नास्ति संशयावकाशः । श्रीकृष्णमपि ते स्वमतपोषणोपकरणममानयन् । इतिहासज्ञास्त्वेतज्जानन्त्येव यदष्टादशाक्षौहिणीमितबलान्तकृदनेकाप्रतिमवीरावसानफलमष्टादशदिनसमाप्यं महाभारतीयं युद्धं गीतोपदेशमन्वैत् । कृष्णार्जुनौ ततःपरं न लोककर्म जहतुः । न कमपि सम्प्रदायमतिष्ठिपताम् । न च स्वप्रतिमार्चनाय लोकं न्ययोजयताम् । ततः प्रतीपमर्जुनः प्रतीपभूपान्तात्तस्माद्युद्धात्परं भ्रातृभिः सह षट्त्रिंशद्वर्षाणि राज्यं बुभोज । श्रीकृष्णश्च ततः परं गार्हस्थ्येन वर्तमानो बहून्यद्भुतानि कर्माणि कुर्वञ्जिजीव । यादवान्ते जाते च देहमत्यजत् । श्रीकृष्णवियोगदुःखमसहमानाः पाण्डवाश्च हिमालयं गत्वाऽन्तमापुः ।

## १३ गीताव्याख्यातॄणां भ्रान्ताः सार्वत्रिका विश्वजनीनाश्च ।

गीतोपदेशः सर्ववर्णाश्रमादिविभागभाजामन्येषां च नृणां सर्वावस्थासु विद्यमानानां चोद्धाराय तान्सर्वानुद्दिश्य प्रयोक्तुं शक्यते । तेषां धर्मान् संक्षिप्योपदिशन्नयं ग्रन्थस्तान्सर्वानेव सोपपत्तिनित्यनैमित्तिकापद्धर्मादिषु कर्तव्येषु नियोजयति । अध्यात्मज्ञानं त्वस्य तथा सर्वमान्यं यथा न केनापि प्रत्याख्यातुं शक्यते । न च तत्कस्यापि मनसोऽर्ष्याद्वेषावुद्भावयति । वेदो-

पनिषदां जैमिन्यादिरचितानां तथा वेदानुसारिवेदान्तादिशास्त्राणां स्मृत्यादीनां च सर्वेषामेव शास्त्राणां मूलग्रन्थानां च समाससारभूतोऽयं ग्रन्थः सर्वेषां नृणां मनोहारीति युक्तमेव। अस्मिन्यदुक्तं तत्सर्वभूभागजातानां सर्वसम्प्रदायानुयायिनामात्मनः प्रसादयति विशोकीकरोति च ॥

## १४ बुद्धजन्मनोऽर्वाग्गीतानिबन्धनं नाभवत् ।

गीतायाः षोडशेऽध्यायेऽनीश्वरवाददर्शनाद् बहवः स्वमतस्थापनपरा गीतां बुद्धसम्प्रदायप्रवर्त्तनादर्वाक्कृतनीं मानयन्ति । ये च तानाप्तयन्ति त उपेक्षन्ते रामायणादीनितिहासान् । अपरिहार्येण पितुर्वचनेन वनवासाज्ञामवाप्य श्रीरामश्चित्रकूटं गिरिं गत्वा तत्र कमपि कालमतिष्ठत् । तस्य भ्रातरौ भरतशत्रुघ्नौ मातृभिः सह वशिष्ठादिभिर्ऋषिभिः सुमन्त्रादिभिर्मन्त्रिभिरन्यैश्च पौरैरन्वितौ तमभ्येत्यायोध्यां प्रति निवर्त्तितुं प्रार्थयामासतुः। रामो यदा न न्यविवृत्सत्तदा राज्ञो दशरथस्य मंत्री ऋषिर्जाबालिर्नास्तिकानुमतैस्तर्कै रामसंकल्पं परिवर्त्तयितुमयतत । जाबालिश्चानास्तिकः परमधार्मिकश्चासीत् । ततो रामो जाबालिं नास्तिक्यप्रचारपरमुक्त्वा प्रत्याख्यात् । जाबालिः प्राप्तावसरमेव स्वं नास्तिक्यं स्वीचक्रे । एतेन वयं दृढं ब्रूमो यद्रामायणकालात्पूर्वमप्यनीश्वरवाद आसीदेव । गीतायां तस्य दर्शनात्सा बुद्धकालादर्वाक् कृतेति वक्तुमनुचितमेव । महाभारते यवना म्लेच्छाश्च युधिष्ठिरस्य सामन्ता आसन्निति दृश्यते । किमेतेन मुहम्मदीयेषु भारतस्य साम्राट्सु जातेषु महाभारतं निरमायीत्युच्येत । प्रसिद्ध इतिहासज्ञः अलबेरुनीत्याख्यो यो वैक्रम्यां द्वादश्यां शताब्द्यामभूत् सोऽधीतसंस्कृतवाङ्मयः प्रमाणपुष्टं

तदानीन्तनमार्यावर्तस्येतिहासं व्यरचयत् । तस्याङ्लभाषानुवादः Albaruni in India इति प्रसिद्धः । तस्मिन् ग्रन्थे स महाभारतस्य विद्यमानतां तस्य च चतुःसहस्रवर्षपुरातनत्वं मन्यमानस्तद्बहुत्रोदहरत् ॥

## १९ गीतामधिकृत्यानुपपन्ना कल्पना ।

केचिदेवमप्युद्घोषयन्ति यद्युद्धकाले पंचचत्वारिंशच्छ्लोकोत्तरां वा केवलं सप्तशतपद्यात्मिकां वा गीतां श्रोतुं लब्धसमयोऽर्जुनो न भवितुं शक्नोति । ततश्च ते ब्रुवते यद्वास्तविक्या गीतायाः सप्त चतुर्विंशतिर्वा सप्ततिर्वा श्लोका एवासन् । ततोऽवर्वाक् तस्याः शरीरोपचयो व्यधायि केनापीति । ततो न पूर्णा गीता श्रीकृष्णोक्ता इति । एवमनुपपन्नं सम्बन्धापेतं जल्पन्तस्ते न जिह्रियति । एतादृश्यः कल्पनास्तत्कर्तॄणामज्ञत्वं विमतित्वं च द्योतयन्ति । यतः श्रीकृष्णार्जुनयोः संवादः सर्वजनवत्सामान्यव्याहारे संवाद एवासीत् । श्रीव्यासस्तत्पद्यतामानयत् । लोके द्वयोर्यापितैकहोरः सम्वादो विवादो वा यदि पद्यैर्वर्णितो भवेत्तर्हि सोऽथोजितपद्यकृद्व्याख्यानलवोपि सहस्रमितैः पञ्चदशशतमितैर्वा श्लोकैर्निबध्यते नाल्पैः । तुष्यतुदुर्जनन्यायेन मन्येताप्येतद्यदि सप्तशतमितैः श्लोकैरपि कृष्णार्जुनयोरुक्तिप्रत्युक्ती जाते तर्हि तयोः पाठे सार्धा केवला वा होराऽपेक्ष्यते । तावांश्च कालस्तदा न दुष्प्रापः । मूढधिय एव ते येऽनेकशतपत्रलेख्यं सविस्तरबहुव्याख्यानं गीतापाठं श्रीकृष्णार्जुनसंवादमेव मन्यन्ते । अनघा अविचारार्हाश्च तेषां कल्पनाः । वस्तुतस्तु कृष्णार्जुनसम्वाद एकां सार्धां होरामव्ययत् । तदेव भगवता व्यासेन पद्यतामानीतं गीतारूपमगमत् । नानैसर्गिकमेतद्यद्यशो विद्वान् धार्मिकः

आततायिभिः कदर्थितोऽपि यः कोऽपि प्रवर्त्स्यमाने दुर्दर्शे सम्बन्धि-राजयोधादिशरीरकर्त्तनरूपवीभत्सव्यापारे युद्धे कृपाशोकमोहाक्रान्तमना भवेत् । तादृशाद्युद्धात्पराङ्मुखता निविवृत्सा वा तस्यावश्यंभाविनी । नैतावदेव-सहृदयास्तु तस्माद्युद्धादन्यानपि निवर्त्तयितुमेषिष्यन्ति । तथैवार्जुनो यद्यपि वेदतदङ्गादिविदासीत् तथापि तादृशि समये तस्य मोविशोकाक्रान्तत्वं स्वभावसिद्धम् । एवमवस्थितावर्जुनमोहनाशः कृष्णस्य हेरैकमात्रविधेय आसीदिति नानुपपन्नम् । मूर्खा विद्वांसोऽपि चैतादृशान्विवादान्कुर्वन्त्येव गीतामधिकृत्य । वयमितःपरमन्यस्मिन्पुस्तक एतादृशानां संवादानामुद्भावनसमाधाने विधास्यामः ॥

## १६ अस्माकं गीताध्ययनं तत्पाठादिशोधनेच्छा च ।

अद्य चत्वारिंशद्वत्सरा गता यदाहमर्हणीयानां श्री केवलराममहोदयानां गुरूणां चरणौ सेवमानश्छात्रावस्थायां तेभ्यो विद्या अध्यगीषि ते तदा चैकस्मात्प्राचीनाद्धस्तलिखितपुस्तकान्मां गीतामध्यापयन् । ततोऽद्यावधि गीतापाठो ममाह्निकं कर्माजनि । ततोऽपि च त्रिचतुरेष्वेव वर्षेष्वतीतेषु मम पूर्वसुकृतपक्तिनाऽहं रैवतके गिरावर्ह्यपादानां श्री देवतास्वरूपाणाम अच्युतानन्दस्वामिनां दर्शनलाभसुखमन्वभवम् । योगितमा मन्त्रायुर्वेदादिनानाशास्त्रपारदृश्वानस्ते स्वचरणसेवायां मामन्तेवासिनमकारयन् । तैः सह तिष्ठन्नहं तेषामद्भुता योगशक्तिरपश्यम् । तद्यथा—

तेऽदृश्यरूपाः कामरूपा यथेच्छमभवन् । तेषां त्रिकालदर्शित्वमस्माभिरनेकधानुभूतम् । पञ्चविंशत्युत्तरशतहायना अपि पंचविंशतिहायनयुवाकारशक्तिभृतस्तेऽदृश्यन्त । यदा कदाच ते मह्यं कस्मादपि प्राचीनतमहस्तलिखितपुस्तकाद् गीता-

व्याख्यानमतीवाद्भुतमकुर्वन् । नाहं जानामि कति श्लोकास्तस्मिन्पुस्तकेऽवर्तन्त । कति च पाठांशभेदाः । यदहं स्मरामि तदेतद्यत्ताट्टङ्मनोहारि व्याख्यानं नान्यत्र मया श्रुतम् । तदा प्रभृति मम मनसि गीताभक्तिरुदभवत् । अहं चान्धभक्तवन्न लब्धेनैव पाठेन तुष्टः किन्तु गभीरं विचारयन्तस्याः पाठापूर्णताममन्ये । यदा च महाभारते मया गीतामानं ७४५ श्लोकमितमस्तीति दृष्टं ततः प्राचीनपुस्तकेभ्यः पाठाद्यन्वेषणे मम मनः सोत्सोहं लग्नम् । खिस्ताब्दे १९१० तमे रसशालायां स्थापितायां ततःपरं समुन्नत्या सह संपन्नायां च तस्यां जातायामेतस्याः प्रवृत्तेर्दृढता सक्रियाऽजनि ।

## १७ रसशालान्तर्गतसरस्वतीग्रन्थभन्डारे हस्तलिखितानि पुस्तकानि ।

द्वात्रिंशद्वर्षाण्यस्माकं ग्रन्थसमाहरणश्रमस्यानल्पधनव्ययस्य चैतत्फलं यदद्यास्माकं ग्रन्थभण्डारे परमेशकृपया भाग्यबलाच्च सार्धषट्सहस्रमिता महार्घा ग्रन्थाः सन्ति । ते च नानाभाषालिपिरूपा अपि प्रायः संस्कृतवाचि सर्वासामेव वाङ्मयशाखानां विद्यन्ते। तद्यथा—वेदब्राह्मणधर्मशास्त्राणि, पुराणानि, धर्मसम्प्रदायग्रन्थाः, वेदान्तेतिहासकर्मकाण्डस्तोत्राणि, मन्त्रतन्त्रग्रन्थाः ज्योतिषग्रन्थाः ( खगोलगणिते ग्रहचारफले च ) सशल्यतन्त्र आयुर्वेदः, अर्थकामशास्त्रे, शिल्पशब्दतर्कशास्त्राणि, काव्यानि नाटकानि, अलंकारशास्त्रमेते चान्ये विषयास्तेषु वरीवृत्यन्ते । तथा प्राचीनार्यभाषा ( हिन्दी ) यां प्राचीनासु वङ्गगुर्जरमहाराष्ट्रगीःसु चापि बहवो ग्रन्थाः सन्ति । सर्वेषामेतेषां ग्रन्थानां नामप्रकारादिवदेकं सूचीपत्रमस्माभिर्निरमायि तद्यथासम्भवं शीघ्रं मुद्रापयिष्यते ।

## १८ षट्त्रिंशदुत्तरद्वादशशततमे वैक्रमेऽब्देऽङ्कितं गीता पुस्तकं प्रचलिताया एकविंशदधिकश्लोकं सार्धद्विशताधिकभिन्ननानापाठांशम् ॥

अस्माकं रसशालासरस्वतीग्रन्थभण्डारे चत्वारिंशद्धस्तलिखितानि गीतापुस्तकानि सन्ति । सर्वाण्यपि तानि भेदं यान्त्येकस्मादन्यदित्येवम् । यत्पुस्तकमवश्यदृश्यं विचारगौरवं च वैक्रमे १२३६ तमेऽब्दे लिखितम् । तस्मिन्नेकविंशतिरधिकाः श्लोकाः प्रचलिताया गीताया वर्तन्ते प्रायः सार्धद्विशताधिकमिताश्च पाठांशपरिवर्ताः । संवदत्यतीवास्य पाठो बहुत्र काश्मीरपाठेन । अन्तेऽस्य यल्लिखितं तेन तस्य कालोऽवगम्यते । तदेतत्—

"संवत १२३६ वर्षे मिति ज्येष्ठ शुक्ल पंचम्यां...दिने गंगाशंकरपठनार्थं गणपतव्यासेन लिखितं प्रतिलीपिं संवत १५९८ वर्षे चैत्रे विमलगणी शिष्य मुनी सिंह विमला...।"

अस्य पुस्तकस्य पत्राणि द्वादश तेषां प्रत्येकं सार्धचतुर्दशाङ्गुलस्तिर्यगायामः । षडङ्गुलमितश्चोपरिष्टादधोभागावधिरायामः । उभयतः सम्भूय चत्वारिंशत्पङ्क्तिभृन्ति पत्राणि । 'पड़ीमात्रा' इति प्रसिद्धा लिपिः ।

अद्य षड्वर्षाणि व्यतीतानि यदास्मत्कृतया टीकया सहास्माभिर्विदुषामालोचनाय प्रथममेवैतत्पुस्तकं प्रकाशितम् । तस्यैव च द्वितीयं संस्करणं संस्कृताङ्गलगिराष्टीकयोस्ततो द्वयोर्वर्षयोरतीतयोर्मुद्रितम् । चन्द्रघण्टाभिधा संस्कृतटीका तु त्रयाणामेवाध्यायानां तत्रासीत्किन्तु तत्स्थपाठभेदपोषणकृतसमालोचनात्मकं सोपपत्ति व्याख्यानमष्टादशानामेवाध्यायानामवर्तत । पुरातनपाठाद्यन्वेषणपराणां जगतोऽनेकदेशवासिनां विदुषा-

मन्येषां च काश्मीरपाठादधिकं तन्मन आकर्षणायाकल्प्यत । न केवलं भारते वसतां किन्तु बहूनामधोदेश अमरीकः (America) शर्मदेश (Germany) इतालि (Italy) प्रभृतिभूभागेषु जनिभाजां तत्र तिष्ठतां च विदुषामन्येषां च गीतानुरागिणां सामयिकवृत्त पत्राणां च गीतापाठाद्यधिकृत्य तत्पुस्तकं सम्मतिविवादहेत्वभूत्।

## १९ भूर्जपत्रलिखिता ७४५ श्लोकात्मिका गीता।

अद्य वत्सरद्वयमयात् । यदा वयं स्वमित्राणामस्मद्ग्रन्थप्रकाशनप्रशंसापराणां च निर्बन्धादस्मत्कर्तृकां टीकां ( चंद्रघंटाभिधाम् ) यथा शीघ्रं मुद्रणाय समापयितुं यत्नमाचरन्त आस्म तदा सहसैव वाराणस्याः प्राप्तात् वाराणसीस्थैरानंदगुहाभिधतीर्थस्थाननिवासिभिः परममाहेश्वरैर्हरिरामपंचोलिसंज्ञकैरस्मन्मित्रवर्यैः प्रेषितात् पुस्तकनिचयात् बह्वन्यविषयपुस्तकान्तर्लीनमिव भूर्जत्वक्पत्रेष्वङ्कितमेतद्गीतापुस्तकमस्मद्दृशोगोचरतामापत् । एतस्मिन्पुस्तके ७४५ श्लोकाः सन्ति। अस्याङ्कनतिथ्यादि विरमति लेखे दर्शितमस्ति तच्चैव ।--

" इति श्रीमद्भगवद्गीता समाप्त विक्रम संवत १६६५ माघ कृष्ण १ प्रतिपदी मंदवासरे "

अस्य पुस्तकस्य विंशतिः पत्राणि । प्रतिपत्रं प्रायः सार्धचर्तुदशाङ्गुलस्तिर्यगायामः । पञ्चाङ्गुलमितश्चोपर्यधः प्रतिपत्रं परिमाणम् उभयतः संमेल्याष्टाविंशतितस्त्रिंशत् पङ्क्तयः । अस्य लिपिः "पड़ीमात्रा" इति या लोके प्रसिद्धा सैव । अस्य पुस्तकस्य वाचनावगमनयोर्बहुमासमितः कालोऽस्माभिर्यापितः । अन्ते चास्योपलब्धिवाचनसाफल्ये अस्माकं भूयस आनन्दायाकल्प्यत । यतस्त्रिंशद्वर्षाणि विहितो गीतान्वेषणेऽस्माकं सफलतामगमच्छ्रमः । एतन्महार्घं पुस्तकं दिव्यमो-

श्वरेणास्मभ्यं स्वयमिव प्रेषितम् । कतिपयानि पत्राण्यस्य तथा शीर्णानि दीर्णानि विकीर्णखण्डानि चासन् यथो तत्स्थानि शब्दाङ्कनानि संगमय्य वाच्यतामानेतुं कृच्छ्रेण वयं प्राभवाम । श्रमखेदाववigणय्यात्र साफल्येनातीवतुष्टप्रसीदन्मानसा वयं ७४५ श्लोकसनाथमिदं गीतापुस्तकं गीताप्रणयिनां विदुषामन्येषां चावलोकनाय प्रकाशयामः । मुद्रितेन पुस्तकेन सहैव प्रतिपत्रमस्य प्रतिकृतीर्विधाप्य ता अपि मुद्रापयितुमस्माकमासीदभिलाषः । किन्तु गोंडलपत्तने तादृशप्रतिकृतिविधायिचित्रयन्त्राद्यभावाद्धयमेतस्य पुरातनस्य विद्वदर्हणीयस्य प्रतिकृतीर्मुद्रापयितुं सम्प्रत्यप्रभवाः । तस्मिन्नतोवोपयोगिनि कार्ये यद्यपि सम्प्रत्यनीशा वयं तथाप्यागामिनि सन्निकृष्ट एव कालेऽस्य पुस्तकस्य सर्वाण्येव पत्राणि प्रतिकृतितामानाय्य विदुषां पुरः स्थापयिष्यामः ।

## २० त्रयाणां गीतामानानां तुलनात्मकं चक्रम् ॥

| | श्रीव्यासमता गीता श्लोकसंख्या । | प्रचलित गीताश्लोकसंख्या । | भूर्जपत्राङ्किते पुस्तके गीताश्लोकसंख्या । |
|---|---|---|---|
| कृष्णोक्ताः श्लोकाः | ६२० | ५७५ | ६११ |
| अर्जुनोक्ताः श्लोकाः | ५७ | ८४ | ६५ |
| संजयोक्ताः श्लोकाः | ६७ | ४० | ६८ |
| धृतराष्ट्रोक्तः श्लोकः | १ | १ | १ |
| समाहारः | ७४५ | ७०० | ७४५ |

अस्मिन्पुस्तके दशानां पद्यानामाधिक्यं कथमिति चेद्ब्रूमहे। षट्पान्दि कतिपयानि पद्यानि लिपिकरेण चतुष्पान्द्येव गणितानि भवेयुः। पुराणमहाभारतादिषु बहूनि पद्यानि प्रकरणपूरणाय षट्पान्दिकुत्रचिदष्टपान्दि च वर्वृतति। एवं चात्रापि लिपिकरेण चतुष्पान्द्येव सर्वाणि पद्यानि भवन्तीति मत्वा कुत्रचित् तादृश्यां गणनायां कृतायां संख्याधिक्यं नासम्भवम्। अथापि-अर्जुनसंजययोरुक्तयोर्ये श्लोकास्तेषां स्तोकमावृत्तिरत्र दरीदृश्यते। यतः संजयः श्रीकृष्णार्जुनसंवादं धृतराष्ट्रस्य पुरोऽवदत्। अतस्तत्त्वानुपपन्नम्। अवधानार्हन्त्वेतदस्ति यदेकविंशत्युत्तराः षट्शतमिताः श्लोकाः श्रीकृष्णोक्ता अष्टषष्टिमिताश्च संजयोक्ता अस्मिन्पुस्तके सन्ति। उभयत्रैकश्लोकमात्रा वृद्धिर्न संशयमावहति। तथैव च प्रचलितायां गीतायामर्जुनोक्ताश्चतुरशीतिः श्लोकाः अस्मिन्पुस्तके तु पंचषष्टिस्ततस्ते व्यासमतेभ्यः श्लोकेभ्योष्टावधिकाः। एत एव प्रचलितायां गीतायां २७ अधिकाः। अस्मत्पुस्तके तु न गरीयान् भेदः। एवं चात्र संशयलेशोपि नावशिष्यते यदेतद्भूर्जत्वक्क्ष्वंकितं गीतापुस्तकं प्रमाणतमं व्यासोक्तया श्लोकसंख्यया संवदति च। अतीवाश्चर्यकृदेतद्यदस्य पुस्तकस्य पाठो भूयान्काश्मीरपाठ एव। किन्तु तत्रापेक्षिता अधिकाः श्लोका न सन्ति। अत्र तु व्याससम्मता पूर्णैव श्लोकसंख्या।

रसशालाप्रवर्तनकर्मणां बहुत्वादस्माकं तत्रैव व्यापृतत्वात्प्रतिमासं द्वादश वा पंचदश वा कला एव वयं गीतायै प्रयोजयितुं शक्नुमः। तथापि तादृशापरिहार्याणि बहूनि कार्याणि भृत्यसात्करिष्यामस्ततश्चास्य नवोपलब्धस्य गीतापाठस्य

टीकां समाप्याचिरादेवापेक्षितां विदुषां टीकापूरणोत्कण्ठां सफलां करिष्यामः ।

पूर्वमस्माभिः प्रकाशिते गीतापुस्तके या उपपत्तयस्तत्र वर्तमानानां पाठांशभेदानां प्रमाणीकरणे दर्शिता आसन्ता अधिकृत्य बहुभिर्विद्वद्भिर्विरोधः कतिपयैरन्यैश्च क्षोभोपि दर्शितः । तस्मिन्विषयेऽद्यावधि न किमप्यस्माभिः प्रकाशितम् । तदधिकृत्योपपन्नां विस्तृततरां च टीकां पूर्णां तदैव कर्त्तुं प्रभवितास्मो यदोज्झितान्यसर्वव्यापारं स्वस्थं च मनोऽस्माकं भवेत् । अतस्तत्करणे यथासम्भवं विलम्बमल्पयितुमिच्छामः । साम्प्रतमस्याभिनवस्य ग्रन्थस्य मूलप्रकाशनेनैव सन्तोषमनुभवामः । अस्मिन् खलु पुस्तके पाठभेदो अधिकाश्च श्लोकाः प्रकरणाद्यौचित्यं तथा भजन्ति यथा वयं मन्त्रेण हृतचित्ता भवामः । अद्यावधि सहस्राणि वर्षाणि वास्तविकं गीतापाठं जनता नालभतेति नूनं मनसि दुःखमुद्भावयति ॥

## कतिपयानीदृंशि विचारार्हाणि मुद्रितानि गीता पुस्तकानि ।

अद्यावधि बहूनि गीतापुस्तकानि मुद्रितानि । तेषां कतीनांचिदुल्लेखमत्र विधित्सामः । तत्र प्रथमं तु तद्यत्काश्मीरेषु मुद्रितमभिनवगुप्तकृतया टीकया सह । एकं च शर्म (जर्मनो) देशे मुद्रितम् । अपरं च कलिकातापत्तनाच्छ्रीशंकराचार्यकृतेन भाष्येण श्रीधरानन्दगीर्योष्टीकाभ्यां च सह प्रकाशितम् । अस्मिन्मुद्रितेऽद्य ६७ वर्षाणि व्यायन् । अन्यच्च श्रीताडपत्रीकर महोदयेन प्रकाशितम् । एतच्च भाण्डारकर ओरीएन्टल रीसर्च इन्स्टीट्युट इत्याख्ये

हस्तलिखितग्रन्थसंग्रहालयेऽवर्तत । मूलमात्रमेतत्काश्मीरपाठेन संवदति । एकं च मद्रासपत्तनीयमैलापुरोपपत्तनस्थे शुद्धधर्ममंडलेन मुद्रितम् । तस्मिन् ७४५ विकृतश्लोकसंख्या पूरिता । इतरदेकं ताडपत्रीकरमहोदयेन कृतान्वेषणसंस्करणं पुण्यपत्तनीयानन्दाश्रमतो मुद्रितम् । एकं लोकमान्य श्रीतिलक कृत भाषा टीकोपेतं एवं अत्र गीतायाः प्रकाशनान्यस्माभिर्विचार्यमाणतामानीतानि तद्यथा—

गभीरविचारोचितं तेषां यत्तत्प्रथमं समालोचामहे ।-यदभिनवगुप्तटीकोपेतं काश्मीरेषु श्रीनगरे मुद्रितं तत्काश्मीरपाठाभिधम् । अस्य चास्माकं पुस्तकस्य पाठेषु बहुधा साम्यम् । प्रचलितायाा गीतायाा अधिकान्यपि पद्यान्यत्र विद्यन्ते । शार्मण्यं, भाण्डारकर ओरोएन्टल रीसर्च इन्स्टीटयूट पूना तः प्रकाशितं चोभे पुस्तके काश्मीरपाठानुयायिनी स्तः । कालिकातासंस्करणं च प्रचलितगीतायामलब्धान् पाठांशान् ज्ञापयति । शुद्धधर्ममंडलमुद्रितं पुस्तकं तु प्रचलितपाठानुसारि बाह्येकैः श्लोकैः पूरितसंख्यं च । किन्त्वत्र प्रचलितपाठश्लोका इतस्ततो भिन्नस्थानेषु न्यस्ताः । इदं पुस्तकं यदस्माभिर्विचार्यमाणतामानीतं तत्र कारणमिदं यदस्य प्रकाशकैर्गीताश्लोका व्यासवचनानुसारं ७४५ मताः । पुण्यपत्तनीयानन्दाश्रममुद्रितं पुस्तकमपि काश्मीरपाठमेव बिभर्ति । तत्र राजानकरामकवेष्टीका वर्तते । सा च विस्तृतदेशीया तत्कर्तुः प्रौढिनी ज्ञानकौशले दर्शयति ।

### अभिनवगुप्तटीकया सह काश्मीरपाठः ॥

अस्य गीतापुस्तकस्य गौरवं तद्यदस्मिन्मूलपाठानां वास्तविकत्वम् । टीका तु न विचारगौरवमर्हति । वस्तुतष्टीकेयं न

पूर्णा न विस्तृता महता व्याख्यानेनापि दुरधिगमा भविष्यति। अन्याभ्यष्टीकाभ्योऽतीव वैलक्षण्यं बिभ्रतीयं न सर्वमतं न च व्यासमतं गीतार्थं ज्ञापयति टीका शुद्धापीयं टीका बहुत्र दोषान्दधाति । तद्यथा–

" धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्र समागमे ॥
मामका पाण्डवाश्चैव किमकुर्वत संजय ॥१॥

कुरूणां करणानां यत्क्षेत्रं अनुग्राहकम् अतएव सांसारिकधर्माणां सर्वेषां क्षेत्रं उत्पत्तिनिमित्तत्वात् । अयं स परमो धर्मो यद्योगेनात्मदर्शनम्–याज्ञव. स्मृ. ) इत्यस्य च धर्मस्य क्षेत्रम् । समस्तधर्माणां क्षयादपवर्गमाप्त्या त्राणभूतं तदधिकारि शरीरम् । सर्वधर्माणां क्षदहिंसार्थत्वात् परस्परवध्यघातकभावेन वर्तमानानां रागवैराग्यक्रोध क्षमा प्रभृतीनां समागमो यत्र तस्मिन् स्थिता ये मामकाः अविद्या पुरुषोचिता अविद्यामयाः संकल्पाः । पाण्डवा शुद्धविद्या पुरुषोचिता विद्यात्मानः । ते किमकुर्वत कैः खलु ते जिताः इति यावत् । ममेति कायतीति मामकः अविद्यापुरुषः। पाण्डुः शुद्धः। " इति वर्तते तथा च तृतीयेऽध्याये ११ श्लोके यत्र प्रजापतिर्यज्ञैः सह प्रजा उत्पाद्य सर्वान्नृन्नित्यनैमित्तिकादियज्ञादीनामवश्यकर्तव्यतामुपादिशदित्युक्तम् । तत्रैव च देवानां नृणां च कर्मविनिमथ उदाहृतस्तत्र प्रतिशब्दसर्थो न वैचित्र्यं न भजते । तत्र श्रीमानभिनवगुप्तो दर्शयति ।

" देवान्भावयतानेन ते देवा भावयन्तु वः ॥
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥

"देवाः क्रीडनशीलाः इंद्रियवृत्तयः करणेश्वर्यो देवताः रहस्यशास्त्रप्रसिद्धाः । ता अनेनकर्मणा तर्पयत यथासंभवं विषयान्भक्षयतेत्यर्थः तृप्ताश्च सत्यस्ता वो युष्मान् आत्मन एव स्वरूपमानेोचितापवर्गान् भावयन्तु-स्वात्मस्थितियोग्यत्वात् । एवमनवरतं व्युत्थानसमाधिसमयपरम्परायामिन्द्रियतर्पणतदात्मसाद्भावलक्षणे परस्परभावने सति शीघ्रमेव परमं श्रेयः परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ ॥११॥" इति वर्तते ।

स यज्ञकर्मादिशब्दानां प्रकृतासंबद्धं दर्शनदृष्टार्थं ब्रूते । एतादृशमभिनवं प्रकृतासम्बद्धमर्थं विदधता नित्यनैमित्तिकादिकर्मविधिं प्रकृतं विहायाऽध्यात्मार्थमाकर्षता तत्राभिनवगुप्तेन स्वनाम्नो याथार्थ्यमिव विहितम् । ततश्चैतिहासिकतां भारतस्य गीतायाश्च सोऽपाकरोत् । श्रौतादिकर्मणां च याऽवश्यकर्तव्यता गीतायामुपदिष्टा तामीदृशा अर्था निरस्यन्ति । ततश्च नास्तिक्यमिव तर्कमात्रमूलं धर्मादिकर्मोपपद्यते । अनेकोत्तमग्रन्थकर्तुर्महापण्डितस्याभिनवगुप्तस्यैवेयं कृति (टीका) रित्यत्रापि महान् संशय उत्पद्यते । यतः स शैवधर्मपरायणः, उपपन्नवक्ता महामाहेश्वरो विद्वत्तमश्चासीदिति तस्यान्येभ्यो ग्रन्थेभ्योऽवगम्यते । अतः प्रसिद्धादभिनवगुप्तादन्य एवायं टीकाकृद्भवेद् दुराग्रहग्रस्तो वा कोऽप्यधीतशास्त्रोऽभिनवगुप्तनाम्ना वा टीकां कृतवान् स्यात् । यत इयं टीका सर्वसंमतं प्रकृतैतिहासिकार्थं मनागपि न पुष्णाति । किन्तु पाठा श्लोकाश्चात्र वास्तविका अनेकेभ्योऽर्वाकृतनेभ्यः पाठभेदकृद्भ्यः सुरक्षिता अतोऽत्र लभ्यः काश्मीरपाठः श्रेष्ठः । वास्तविकस्य ७४५ श्लोकात्मकस्य गीतापाठस्य निर्णयायादः पुस्तकं बहु वेदयति ।

## कथमभिनवगुप्तटीकायामध्यात्मार्थाकर्षणम् ?

बहवः खलु भारतीयानाचारानितिहासांश्च लघयितुं विरोद्धुं वा यियतिषमाणा दुराग्रहं करणयन्ति । ते च द्वेषवलादज्ञानबलात्, महाभारतादीनामपूर्णाभ्यासादनभ्यासाद्वा पल्लवग्रहणमात्रविद्यया वा महाभारतं कविकल्पनमेवास्तीति वावच्यमानास्तस्मिन्निर्मूलं स्वमतमारोपयन्ति । यदि टीकेयमभिनवगुप्तकृतैव मन्येत तर्हि धृतराष्ट्रपाण्डवकौरवादयो मनुजविशेषवाचकाः शब्दा न इतिहाससम्बद्धाः किन्त्वध्यात्मविद्याङ्गसंज्ञाविशेषा एव मता भवेयुः । एवं कृते-ऐतिहासिकं सर्वज्ञानविज्ञानसमवेतं महाभारतमेवासत्यं कल्पितदन्तकथारूपं भवदुद्धृतदृढमूलतामायाति । ततश्च श्रीव्यासर्षिणा कृतायास्तत्कृतमहाभारतान्तर्वर्त्तिन्या गीताया अनेकासां तट्टीकानां च गौरवोपयोगरूपं जीवितं क्व यायात् । अतएव वयं मन्यामहे यत्कोऽपि महापण्डितो विद्याभारवाह उन्मार्गगमितमतिर्वेदान्तानामन्धप्रचारकोऽभिनवगुप्तटीकापदेशेनावसरलब्धं स्वमतं गीताया आकृष्य न्यास्थत् । यतस्तस्यामेव टीकायामभिनवगुप्तः स्वयमेव महाभारतस्यैतिहासिकत्वं स्वीकरोति । गीताजातीयानां ग्रन्थानां टीकासु प्रकृतासम्बद्धस्यार्थस्य सन्निवेशो ह्येषामितिहासतामेवोन्मूलयति । 'अहं ब्रह्मास्मि' 'तत्त्वमसि' 'ब्रह्म सत्यं जगन्मिथ्या' इत्येवमादीनि वाक्यानि विविधानेकशास्त्रशाखासम्प्रदायाद्यनुयायिनामपि वेदान्तविदां सर्वत्र जगति सर्वेषामेवाभिधया वा व्यञ्जनया वा मान्यान्येव । किन्तु कतिचित् स्वार्थलक्ष्यास्तानि जगद्वञ्चयितुमुपयुञ्जते । ब्रह्मैव सत्यं जगत्तु मृगतृष्णिकावदसत्यमिति सत्यमपि वचनं ब्रुवाणास्ते वेदान्त-

सारभूतामिमां वाचं यदा कदाप्यनवसरेपि प्रयुज्य स्वं ब्रह्मविस्त्वं दर्शयन्तो जनं वञ्चयन्ति । तेषां रुचिर्यदि केनापि जिज्ञास्येत चेत्तर्हि ते सुभोज्यसुपरिधेयसुभोग्यलिप्सवोऽनधीतवेदान्तेभ्योप्यधिकं ज्ञायन्ते । लिप्साकाले तेषां ब्रह्मज्ञानमदर्शनं भवति । यद्यपि ते षष्टिसप्ततिशतवत्सरमात्रस्थायि न शाश्वतं नापेक्ष्यं न च सत्यं मानवं शरीरं ब्रुवते तथापि स्वयं प्रवयसोपि नोज्झन्ति संसाररागम् । वस्तुतस्तु दाम्भिकास्ते महान्तमपकारं जगतश्चेक्रियन्ते ।

## शुद्धधर्ममण्डलीयं गीतापुस्तकम् ।

इदं पुस्तकं नैकमपि श्लोकं प्रचलितगीताया अधिकं न चैकमपि पाठभेदं धत्ते । ततः प्रतीपं प्रचलिताया गीतायाः ३७ श्लोका न्यूना एवात्र । श्लोकाध्यायक्रमादिनियमोप्यत्र विचित्ररूप एव । तद्यथा--पूर्णा गीता षड्विंशतिमितेष्वध्यायेषु विभक्ता । प्रथमचरमावध्यायौ विशेषनामभाजौ । अन्ये २४ अध्यायाः प्रत्येकं चतुर्विंशतिश्लोकाः । गायत्रीच्छन्दः २४ अक्षरं शरीरमप्यस्मदादीनां चतुर्विंशतितत्त्वमतो गीतायाअपि २४ श्लोका अनिवार्यत्वेन भवितुं योग्या इति तत्रोपपत्तिः प्रकाशकैः कल्पिता । एतादृश्यः कल्पना यदि मान्याः स्युस्तर्हि वेदादिविद्यानां सर्वासामपि प्रत्येकं २४ अध्यायादयस्तत्रापि प्रत्यध्यायादि २४ मन्त्रसूत्रादिर्मन्ति भवितुं युक्ताः । न च तत्तथा । तत इयं कल्पना नात्रापि यथार्था । अत्र च "षट्शतानि—०" इति गीतामानप्रदर्शकवचनं व्यासोक्तं प्रमाणत्वेन स्वीकृतम् । किन्तु तदनुसारं कृष्णोक्ताः श्लोकाः ६२० न भवन्तः ६०८

एव सन्ति । अर्जुनोक्ताश्च ६९ न व्यासवचनानुसारं ५७। एतदपि तत्र वैचित्र्यं यत्कृष्णार्जुनोक्तास्तेपि बहवः श्लोकाः सन्निवेशिता ये गीताभृतो भीष्मपर्वणोऽन्यत्रापि-उद्योगानुशासन-शान्त्यादिपर्वसु वर्तन्ते न च ये प्रचलितायां गीतायां सन्ति। शुद्धधर्ममण्डलसदस्या गीतां भीष्मपर्वणि विद्यमानां तत्रैव च गौरवभाजं मन्यन्ते तथापि ते ततो बहीकान् श्लोकान् ८२ मितान् गीतायां न्यवेशयन् । एवं चाकृष्य कथमपि तैः ७४५ श्लोकानां पूर्त्तिः कृता । यदिनाम शु० ध० मं० सदस्याः प्रचलितगीतापाठश्लोकाननिरस्य तत्रान्यान् ४५ श्लोकानपूरयिष्यंस्तर्हि पुस्तकमिदं विदुषां विचारपदवीं नूनमभक्ष्यत । किन्तु तैः ३७ श्लोकनिरसने महाभारतादन्यस्माद्वाऽऽर्षग्रन्थात्प्रमाणोल्लेखपुरःसरं न काप्युपपत्तिर्न्यासि । अन्यच्च तत्रादभुतमेतद्यत्प्रथमचरमावध्यायौ विहाय सर्वेष्वेवाध्यायेषु कृष्णोक्ता २४ श्लोका एव । एतत्साम्यमभ्यस्ताभिनयवदन्यत्रालभ्यमेव । किं तावदेव कृष्णोक्तं व्यासेन निबद्धम् । एतदपि भ्रमावहं यत्सर्वेभ्य एव प्रचलित गीता अध्यायेभ्यो यथेच्छं निरस्ताः परिवर्तिताश्च कतिपये श्लोकाः । तदेवं यथा प्रथमाध्याये द्वितीयाध्यायस्थाः श्लोकाः संनिवेशिताः । द्वितीयाध्याये त्रयस्त्रिंशच्छ्लोका हठान्निःसारितास्तत्रैव च भीष्मपर्वीय २३ तमाध्यायस्था दुर्गास्तुतिर्योजिता च।

अन्यच्च—

| शुद्धधर्ममण्डलीय गीताध्याय संख्या। | प्रचलिताया गीताया येभ्योऽध्यायेभ्यः श्लोकानुद्धृत्यय पूर्वकोष्ठाङ्कितेष्वध्यायेषु ते निवेशितास्तेषां संख्या । |
|---|---|
| ३ | १०, ४, ९, ७, १४, ३. |
| ४ | १२, ६, १०, ४, ७, ५, १८. |
| ५ | ६, २, ७, १३, ५, ३. |
| ६ | ३, १८, ५, ९, १३, ७, १५, १४. |
| ७ | १६, १८, १५, ९, १२, ४, ८. |
| ८ | १४, १६. |
| ९ | अस्मिन् सप्तदशाध्यायस्थाः सर्वे एव श्लोका उद्धृताः। |
| १० | ७, १४, १८, ३, २. |
| ११ | १८, ४, ८. |
| १२ | ११, ७, १०, १८, ८. |
| १३ | १०, १४, १५, ८. |
| १४ | अस्मिन् षष्ठाध्यायस्थाः सर्वे एव श्लोका उद्धृताः |
| १५ | १४, १५, १३, ९, ७, २, १८, ३. |
| १६ | ८, ३, २. ५, ७. |
| १७ | २, ५, १२. |
| १८ | २, १४, १८, ३. |
| १९ | ५, ६, १८, ३. |

| शुद्धधर्ममण्डलीय गीताध्याय संख्या। | प्रचलितायां गीताया येभ्योऽध्यायेभ्यः श्लोकानुद्धृत्य पूर्वकोष्ठाङ्कितेष्वध्यायेषु ते निवेशितास्तेषां संख्या। |
|---|---|
| २० | १०, १८, २, १३, ९. उद्योगपर्वस्थ ४२. ४३ तमाध्याययोः श्लोका उद्धृताः। |
| २१ | १३, २, ३, १८. |
| २२ | ३ १३, २, ४, ६, १८, १७. |
| २३ | १२, ७, ९, १८, ३. |
| २४ | १८, ४, ३, ९, १०, ६, २, ११. |
| २५ | १८, ११, २, ४, ५. ६, ७, ८, १०, ९, १७. |
| २६ | ११, ९, १२, ४, ७, ३, २, १८, १५ १०, ११. |

शुद्धधर्मगीता पाठादिसंशोधने न किमप्युपकरोतीति दर्शयितुमेवैतदुपरि सर्वं दर्शितम्। अक्षपातलब्धनामग्रहणप्रकारेणैव गीतापाठपूर्तिस्तत्रास्ति। तत्र व्यासोक्ता गीताश्लोकसंख्या न पूर्णा प्रत्युत प्रचलिताया गीतायाः ३७ श्लोकानां न्यूनतां विधाय लक्ष्यविरोधि कृतम्। यदि गीताप्रकरणादिसम्बद्धानि पद्यानि सर्वस्मिन्महाभारतेऽन्विष्टानि भवेयुस्तेषां संख्या न्यूनतो न्यूनापि ५००० मिता भवेत्। न च तानि गीतायामन्तर्भावयितुं शक्यन्ते। इमां गीतामधिकृत्यैतावान्यो विचारोऽस्माभिः कृतस्तत्र कारणमिदं यदस्याः ७४५ श्लोकसंख्यां व्यासवचनानुसारिणीं दृष्ट्वा तत्प्रमाणत्वे मतिभ्रमसाम्न कुर्यात्कोपीति।

## २५ पुण्यपत्तनस्थानन्दाश्रमे मुद्रिता प्राचीन-पाठवती गीता ।

अद्यवत्सरावतीतौ पुण्यपत्तनीयानन्दाश्रमतोऽप्येकं गीता-पुस्तकं राजानकश्रीरामकविकृतया टीकया सनाथं मुद्रितम् । एतच्च काश्मीरपाठभृत्प्रमाणभूतं च । अस्य पाठाः सत्यमेव पुरातनाः । पाठांशभेदानधिकांश्च कतिपयाञ्छ्लोकानधिकृत्यै-तावद्ब्रूमहे यदेतत्पुस्तकमस्माकं सप्तवर्षातीतसमयमुद्रितपाठ-मेवानुकरोतीति ।

## २६ लोकमान्येन श्रीतिलकमहोदयेन संस्कृता गीता ।

श्रीलोकमान्येन गाङ्गाधरिणा बालेन तिलकेन च सोपोद्घातं महाराष्ट्र भाषायां गीता व्याख्याता । एतद्व्याख्या सुविस्तृतं व्याख्याननियमानविहाय कृतम् । अत्र प्रायः प्रसिद्धानामेव व्याख्या-तृणां सरणिरनुसृता दृश्यते । अस्य व्याख्यानस्य महाराष्ट्रीभाषा-गीतायां कर्मयोगोऽस्तीति तस्मिन्मतं तच्चोचितमेव । किन्तु तत्र न महाभारतानुसारं श्लोकसंख्याविचारः कृतो नवा तत्साम्प्र-दायिकपक्षपातं सर्वथोज्झति । श्रीतिलकमहोदयो वास्तविकीं गीतामल्पीयोमानां गते बहौ काले प्रक्षेपवृद्ध्याऽद्य प्रचलितैता-वती ( ७०० श्लो० ) जातेत्यभिप्रयन् प्रतीयते । तादृशा बहु-श्रुताः सुधियोऽपि तथा मन्यन्त इति खिद्यते चेतः ।

## २७ गीतामधिकृत्य निर्मूलकल्पनामूलानि मतानि ।

गीतामधिकृत्य बहवः स्वविचारोद्भाविता नानाकल्पना विधाय विचित्राणीव मतानि प्रदर्शयन्ति । वाङ्मयान्वेषणवि-

चारनिर्णयमिषेण ते स्वबुद्धिविभवे श्रीवेदव्यासमप्यतिशयितुं कामयन्ते । नातिविस्तृतेऽस्मिन्नुपोद्घाते वयं तादृशि मतानि सर्वाण्येव प्रत्याख्यातुं न कल्पामहे । तथापि तेषां द्वयमत्र समाधातुमीहामहे समासेन । तद्यथा—(१) साम्परायभुवि नाध्यात्मं ब्रह्मतत्त्वं वाऽर्जुनेन जिज्ञासितमासोत्तस्यानवसरत्वात् । गीतायां तु तदेव मूर्तमिव । (२) तदा तत्र नासीत्समयः ७४५ श्लोकमितां गीतां प्रवक्तुं श्रोतुं च । तदेतद्द्वयं यथाक्रमं समादध्मः ।—

## २८ कृष्णस्य गीताध्यात्मोपदेशो रणाङ्गणेऽपरिहार्य एवासीत् ॥

प्रथमा कल्पना तावद्विचार्यताम् । तद्विचारणे च कथमर्जुनेन शस्त्राणि त्यक्तानीति सावस्था तावदधिगन्तव्या । अर्जुनो महाभारतीये युद्धे नायकाग्र्योऽभूत् । तस्मिन् विरतयुद्धोद्यमे जाते न तद्युद्धं प्रावर्त्स्यत् । पाण्डवानां मनसि प्राणेभ्योपि कर्तव्यानामधिको मान आस । धर्मसत्याद्यत्यजन्तस्ते बहूनि वर्षाणि दुःखापमानकार्पण्यान्यभुञ्जन् । किं तस्य सर्वस्य फलम् । अफलमेवैतादृक्कच्चित्?। अभूते युद्धे सर्वलोकदुःसहानामधिकदुःखानामासीत्सम्भवः। यतस्ततो दुर्योधनशकुनिदुःशासनादयोऽधर्मकृतः सुखेन दीर्घमायुरजीविष्यन् । धर्मात्मानः पाण्डवाश्च नित्यं स्थानान्तरं कुर्वाणा दुःखेनावशिष्टं कालमनेष्यन् । श्रीकृष्णपाण्डवानां बलविद्याबुद्धिधर्मादिविभवाः श्रीकृष्णस्य योगशक्तिश्च सर्वजनोपहास्यतां नैष्फल्यं चागमिष्यन् । न च तान्भूयः कोप्यज्ञास्यत् । तेषां नामानि मंदप्रभावाण्यभवि-

ष्यन् । ते चास्थिरस्वभावताया अथ च विशालाया दुर्योधन-वाहिन्या भीतेः पात्रतामगमिष्यन् । अयशोभाजश्च भवेयुः । आततायिनाशाय विहितास्तेषां प्रतिश्रवा वैयर्थ्यमापद्येरन् । प्रतिश्रुतमकृतं हि धर्मशास्त्राणि नरकगमननिदानमिति दर्शयन्ति । प्रजापीडनपटूनां भारायमाणशरीराणां क्रूरचेष्टितानां बलदृप्तानां नृपाणामहननं धर्मक्षयमकरिष्यत् । सन्धये गच्छन्तं श्रीकृष्णं प्रति द्रुपदात्मजा दुःशासनकराकर्षणनिस्तेजसो मूर्धजान्सन्दर्श्य तादृशपापप्रतिफलप्रदानाय शत्रुवधान्तं युद्धं नूनं भवेदित्यवोचत् । कृष्णश्च तत्तस्यै प्रतिशुश्राव । यतः स कौरवकर्तृकाणि पाण्डवदुःखानि न व्यस्मरत् । यदि च मध्यमपाण्डवो युद्धाद्व्यरिरंस्यत्तर्हि महाभारतीयेतिहासस्यान्य एव रसोऽभविष्यत् । अर्जुनश्चाचार्यगुरुवृद्धसम्बन्ध्यादिमारणरूपबीभत्सकर्मावसरे सहृदयमानवमात्रादुर्लभैर्दयाशोकादिभिराक्रान्तः सहसैव युद्धाद् व्यरंसत् । अशाश्वतराज्यसुखादिलोभेन गुरुभ्रात्रादिव्यापादनं पापतमं कर्मेति स तदाऽमन्यत । बहुराजकुलक्षयं स्ववंशोच्छेदनफलं च युद्धं न करिष्यामीत्युक्त्वा शस्त्राणि त्यक्त्वा च रथोपस्थ उपाविशत् । सर्वसंशयावहे तादृशे समये तदवस्थमर्जुनं युयुत्सुं कर्तुमेतद् दुष्करं कार्यं श्रीकृष्णस्य कर्तव्यतामाप श्रीकृष्णश्च वेदान्तोपदेशब्रह्मप्रवचनमन्तरा तदतिदुष्करं मेने ।

मानवैः परिहर्तुमशक्यो जगत्येष नियमो जागर्ति यन्मनुष्याः किमपि राद्धान्तमनुसरन्तः पूर्वं दृढं चिकीर्षितमपि सन्निकृष्ट आपतितेऽवसरे बहुत्र चिकीर्षां जहति । सन्निकृष्टे महत्यपि कार्ये बलियसामपि मनः स्थिरतां नाधातुं क्षमते । एवं चेदृशानि बहून्युदाहरणानीतिहासेषु दरीदृश्यन्ते । तथैव

चासीद्युद्धात्पराङ्मुखीभावकालेऽर्जुनस्यावस्था । युद्धाय प्रयियासुरर्जुनः स्वसंविदां रूपं नूनमजानात् । किन्तु युद्धभूमौ वृद्धान्मान्यान्यवीयसो भ्रातॄन् मातुलान् प्रियसुहृदो वीरांस्तत्स्वरशरपातान् प्रतीक्षमाणान् प्राणान् जिहासूनिवापश्यत् । ममैव पुत्राः पौत्राः सम्बन्धिनश्च परैराकृष्टजीविता भविष्यन्तीति च सोऽकल्पयत् । तत्र मानवोचिता धैर्यच्युतिस्तस्याभवत्स चातीतं सर्वं दुःखादि विस्मृत्य युयुत्सां जहौ ।

ये खलु तादृशेऽवसरे ब्रह्मज्ञानोपदेशमनवसरं मन्यन्ते ते नैव जानन्ति विवर्त्तान् मानवमनोभावानाम् । अथवा न तैस्तादृशी मनोऽवस्था कदाप्यनुभूता । किमपेक्षते कियत्प्रभु च प्रेम भवतीत्यपि ते न जानन्ति । यदा ह्यर्जुनेन मृत्युमुखे पितरः सम्बन्धिनोऽन्ये च वोरा दृष्टास्तदा दयाविषादौ तस्य हृदयं पराभूय तं युद्धाक्षममकुरुतामिति न चित्रम् ।

पाश्चात्यां सरणिमनुसृत्य ये विद्याध्ययनं विदधाति भौतिकीं सम्पदं चैव पुंसामीप्सिततमां मन्यमानान्साध्वनुकरणीयाचारान् मन्यन्ते ते भारतीया अपि स्वान्प्रति प्रेम्णः प्रभावमधिकृत्य सहृदयतादरिद्रं मनो विभ्रति । एतदेवास्माभिः प्रथमगीतापुस्तकोपोद्घाते यन्निदर्शितमासीत्तदद्य यातेषु सप्तसु वत्सरेषु हरिवर्षीयं ( युरोपीय ) वीभत्सयुद्धं प्रमाणीकरोति । ये पुनर्युद्धभूमौ ब्रह्मज्ञानोपदेशो निष्प्रयोजन इत्युद्घोषयन्ति तेषां दृढाभिप्रेतानुसारमर्जुनस्तत्स्थानमवतीर्ण एव सहसा गुरून्मान्यान् वृद्धान् भ्रातॄन् पुत्रान् पौत्रान्—अन्यांश्च सम्बध्यादीन् पशुघातमहनिष्यच्चेत्तदेवोचितमभविष्यत् । वीरेष्वेतादृशो भावा अनार्यत्वममानुषं निर्दयत्वं च पोषयन्ति । आर्यमनोऽज्ञानविल-

सितमेवैतद्यतो नार्यास्तादृशं वन्यहिंस्रोचितं युद्धं चिकीर्षन्ति। अतीतवर्तमानार्यानार्यमनोवस्थे कीदृश्याविती दानीन्तनमभुक्तस्तनन्धयवृद्धस्त्रीजनं युद्धं निर्णाययति। यादृशानि सर्वभूतसंहारकारणान्यस्त्रादीनि सम्प्रति युद्धेषूपयुज्यन्ते तादृशेषु ततोऽपि भयानकतरेषु ज्ञातेषु सत्स्वपि आर्याः तत्कालीनानार्याश्च पुराणि ग्रामान् गृहाणि क्षेत्रारामादीनि च नानाशयन्। न च तत्र वसतो प्रजाजनानपीडयन्। तेषां युद्धानि प्रायो निश्चित एव समये क्षेत्रे चाभूवन्। तस्मिन्युध्धे ये नानादेशेभ्यो योद्धुमागतास्ते योधा वीराश्चोभयोर्युयुत्सुवलयोर्विभक्ता आसन्। तत एव तैः प्रसिद्धमैतिहासिकं धर्मयुद्धक्षेत्रं कुरुक्षेत्रमुपयोग्यमन्यत। ईदृशेषु युद्धेषु युयुत्सुभ्योऽन्याः प्रजा न कदर्थनमापुः। युद्धे क्रियमाणे तासां कर्माणि वाणिज्यादीनि च न विकृतिमयुः। युद्धारम्भात्पूर्वं प्रतीपा वीराः परस्परं प्रणेमुः। युद्धावसाने दिनावसाने प्रतीपवीरानाभाषितुं वीरा अगच्छन्। एवं च तद्धर्मयुद्धमवर्तत। प्रायः सर्वं एवार्या अद्यावधि तादृशानेव नियमाननुसृत्य युद्धानि कुर्वन्ति। यदि वयं तेषां युद्धानां सम्प्रति वत्सराभ्यां प्रचलितेन युद्धेन सह तुलनां कुर्मस्तर्हि साम्प्रतिकं तदतीव मनःखेदावहम्। नैतद्वयमभिप्रेमो यत्सर्व एव पाश्चात्या नियमहीनामीदृशीमवस्थां मनसा पोषयन्तीति। सर्वजनहितैषिणो मान्यादरपराः कुलीनत्वसदाचारप्रणयिनः सद्भावाः सन्त्येव बहवस्तत्रापि। किन्तु तादृशाः सहृदयाः क्रमेण विचेयतां यान्ति भौतिकसंपदिच्छाप्रसारात्। प्राच्यां प्रतीच्यां वा दिशि यत्र कुत्र वा जगतो भागे वसतां मनुष्याणां मनःसु प्रणयवात्सल्यादीनि यदा कदा जागृति चेति निसर्ग-

सिद्धत्वान्न केनापि प्रत्याख्यातुं शक्यते। अतो मानवः सहृदयश्च भवन्नादरप्रणयादिभिर्युद्धोपक्रमे हृतमना अभवदर्जुन इति न संशयोत्पत्तिकारणम्। एवं दुस्तरसंशयावस्थामापन्नः कृष्णः पाण्डवानुभूते आभीलकार्पण्ये सस्मार। एतदपि स नूनं जज्ञौ यद्युद्धेऽजाते पाण्डवाः स्वां दुर्गतिं दूरयितुमवशिष्ट आयुषि नैव प्रभविष्यन्ति। एष एव विचारस्तस्य मनोऽतीवास्थिरं चकार सोऽर्जुनस्य समदुःखसुख आस। अतएव कृष्णोक्तं ' यद्यर्जुनो म्रियते तर्हि नाहं जीविष्यामि। तेन विना जीवितुं न शक्नोमि " इति दृश्यते। एवमवस्थितं पाण्डवानां भाविदुःखं प्रत्यक्षमिव पश्यन्तं तत्स्वस्मिन्ननुभवन्तं कृष्णं तदा पर्यभवदेव नैराश्यमिति न दुरवबोधम्। अतोऽन्येभ्यो हेतुभ्यश्च तदा कृष्णस्यार्जुनयुयुत्साजागरणं दुष्करमत्यावश्यकं चाजनि।

गीतायां यद्दृश्यते तद्यथा—कृष्णोऽशाज्जगदिदं मायैवेति। त्वं, तव अहं, मम, इति भावा अहङ्कारोद्भाविता एव। देही देहिनमन्यं न हन्ति न च तेन हन्यते। एवंविधेनात्मोपदेशेन सहैव सोऽर्जुनं क्षत्रधर्मकर्माप्यशिषत्। यस्मिन्नकृते तस्य सुखात्यन्तनाशः क्षत्रियत्ववैयर्थ्यं चापद्येताम्। वर्णधर्मान् स्वान् स्वान् सर्वे एवाचरन्तु येन तेषामस्मिन् जन्मन्यभ्युदयो भवेत्परस्मिंश्च स्वर्गो वा मोक्षो वा स्यात्। अन्यच्च बहूपयोगि तत्र कृष्णेोपदिष्टमस्ति येन त्यक्तयुयुत्सोऽर्जुनो युयुत्सां पुनरभ्यगात्। सर्वं च सर्वोपकरणक्षमं गीतायां वर्तते। एतेनैतदपि नावगन्तव्यं यदर्जुनो गीतोपदेशं श्रुत्वाऽश्मदृदयोऽभवदिति। केवलमसमया अहिताः प्रेमदयादिभ्य उद्भूता भावा अर्जुनमनो युद्धकाले कुण्ठितमिवाकुर्वंस्तान्कृष्णो महता कौशलेन प्रसाध्या-

त्मज्ञानोपदेशेन चापाकरोत् । तादृशे समये प्रायेण सर्वेषामेव तादृशा भावा उत्पद्यन्ते यांस्तान् प्रकृतिस्थाः कर्तव्यमनुज्झन्तः सज्जना अचिरेणैव जहति । गीतोपदेशं निशम्यार्जुनस्य मोह-भारो विलयमयात्स चाकृते युद्धे भाविनीमापदं जज्ञौ । स च वास्तविकं क्षात्रं कर्म कर्तुमकैतवेनैयेष । श्रीवेदव्यासश्च यदा सर्वं तमितिहासं छन्दोनिबद्धमकरोत्तदा तदन्तर्वर्त्तिनीं गीतामपि पद्यतामनयदिति निसर्गसिद्धम् । सेयं गीता बहुशास्त्रमूलरा-द्धान्तगर्भिता वर्तते । श्रीव्यासर्षिणा किमर्थमस्य कृष्णार्जुनसं-वादस्य गीतेति नामाभ्यधायीति न प्रकृतेन सम्बध्यते । —एवं निश्चीयते तादृशेऽवसरे युद्धक्षेत्रे चार्जुनं प्रति गीतोपदेश उपपन्न एव ।

## २९ गीता महाभारते न प्रक्षेपरूपा ।

शान्त्याश्वमेधिकपर्वणोरन्यत्रापि बहुत्र व्यासे कृष्णार्जुन-सम्वादरूपां गीतां समकेतयत् । पुराणादिषु च यत्र यत्र महा-भारतीया कथा संक्षिप्तकथिता तत्र तत्रापरिवर्तित एव गीता-समासोऽप्युद्धृतः । एतज्ज्ञापयति यत्कतिपये विपश्चितो ये गीतां महाभारते सप्रकरणं विद्यमानामपि तत्र प्रक्षिप्तां मन्यन्ते तन्नि-र्मूलमिति ।

एतैरनेकैरुल्लेखै रणक्षेत्रे कृष्णेन गीतोपदेशः कृत इति प्रमाणीक्रियते । सर्वं चैतदालोच्य दृढं मन्यामहे यदर्जुनं प्रति तदा ब्रह्मज्ञानवर्णधर्मादीनधिकृत्य कृतो गीतोपदेशो नासमयः । स च व्यासनिबद्धः ७४५ श्लोकात्मकः ।

(२) एतावतीं गीतां वक्तुं श्रोतुं च तत्र रणक्षेत्रे समय

आसीत्कश्चित् ? सम्प्रति द्वितीया कल्पना विचार्यते । कतिपय एवं मन्यन्ते यद्युद्धे प्रवर्त्स्यमाने नासीदेतावान् समयो यस्मिन् ७४५ श्लोका उक्ताः श्रुता अधिगताश्च भवितुं शक्नुयुः । गीतोदेशमधिकृत्य संशयाना अपि ते ब्रुवते यदभवदपि गीतोपदेशस्तत्र ७, २८, ३६, १००, वा श्लोकात्मक एव भवितुमुपपद्यते । यतस्ततोऽधिकं वक्तुं श्रोतुं च कृष्णोऽर्जुनो वा कथं तदा समयमलभत । तेषां मते तावानुपदेशविस्तरः समयाभावादसंभव आवश्यकताऽभावादनुपपन्नश्च । एतादृशानां भावानां प्रदर्शनं जगद्वञ्चनपटु विचारासहं च ।

अर्जुनो न केवलं नायकाग्र्योऽभवत्किन्तु वेदतदङ्गशास्त्रादिविच्च । यदा युद्धभूमौ तस्य मनो युद्धान्न्यवर्तत तदा न सामान्येन संक्षिप्तेन चोपदेशेन स कर्तव्ये युद्धे प्रवर्त्तयितुमशक्यतेति विवेकशीलानां नादुर्बोधम् । तादृशस्य विदुषो विवेकिनो विक्रान्तस्य च मनसि यदा केपि विचारा उद्भवेयुस्तदा महान्तं बहुशाखमुपदेशं विना तेषां निरसनं दुष्करतममेव । गीतायां लभ्यमाना अनेका बहुविधाश्चार्जुनकर्तृकाः पृच्छास्तदेतदस्मदुक्तं प्रमाणयन्ति । तादृशानामनुयोगानां प्रतिवचो दातुं श्रीकृष्ण एव प्रभुरभून्नान्यः । अतएव नानैसर्गिकमेतद्यत्कृष्णेन यावानुपदेशो गीतया कृतस्तावानपेक्ष्यत । ततोऽल्पीयसि कृतेऽर्जुनस्य सन्देहानां निरासो नाभविष्यन्न च तस्य मनो युद्धायोत्साहमधास्यत् । कृष्णार्जुनसंवादः कतिपयक्षणस्थायी चेदभविष्यत्तस्य संवादस्य तर्हि नूनमसारताऽसर्वोपयोगिताऽर्जुनस्य प्रेमदयादम्भाभिनयश्च एतेषामाभास आपद्येत ।

याथार्थ्यं त्विदं यदर्जुनस्य मोहो दया युद्धात्पराङ्मुखता

च वास्तविकतां मनागपि नैव जहुः । यदि नाम कृष्णोर्ऽर्जुनं तर्काऽध्यात्मज्ञानोपेतं कर्तव्यं नाज्ञापयिष्यत्तर्हि नार्जुनस्य युद्ध-विरिरंसाऽनंक्ष्यत् । श्रीवेदव्यासश्च तथैवाशेते । अतो वास्तविको गीतोपदेशः कतिपयश्लोकमात्रमितोऽद्य प्रचलिता गीता तु क्रमेण कालेन च संजयव्यासवैशम्पायनसूतकृतान्विस्तरान्विभ्रत्येतावती जातेति भ्रम एव ॥ एवमविचारितं ब्रुवाणानां भारतीयेतिहासाचारानभिज्ञतो स्फुटैव । बुद्धिमता विदुषा लोकमान्येन तिलकमहोदयेनापि वास्तविकं गीतामानमधिकृत्य विचित्रेव सम्मतिः प्रदर्शिता । तत्र वयं साश्चर्यं खिद्यमानचेतसो भवामः । यथा च तेन श्रीमद्भगवद्गीतारहस्याभिधस्य स्वगीताव्याख्यानस्योपोद्घाते ( विषयप्रवेशे ) महाराष्ट्रीय भाषायां निदर्शितम् । तद्यथा— "सम्भवेदिदं यत्कालक्षेपासहे युद्धे प्रवर्त्स्यमाने दशविंशति वा श्लोकान् तेषां संक्षिप्तार्थं वा कृष्णोर्ऽर्जुनमशिषत् । किमपि प्रकरणाविरुद्धं संयोज्य तदेव धृतराष्ट्रं संजयोऽश्रावयत् । तथैव व्यासः शुकं शुको वैशंपायनं वैशम्पायनो जनमेजयं जनमेजयः सूतं सूतः शौनकं प्रावोचत् । यद्वा महाभारतकारः स्वयमेव प्रतिसंस्कृत्याद्यप्रचलितरूपां गीतां निर्ममे ।"

एवंविधा तिलकमहोदयानां निर्णयास्तेषामस्मद्धर्मग्रन्थापूर्णज्ञत्वं पाश्चात्यशिक्षाप्रभावापिहितविवेकत्वं च ज्ञापयन्ति । यतस्तेषामनेनोल्लेखेनार्जुनस्य युद्धाचिकीर्षा, तस्यैव मोहः, कृष्णोपदेश, महर्षेर्व्यासस्य कृतिः सम्मतिश्चेति सर्वाण्येतानि गौरवं जहति । अथवैतत्पूर्वमस्माभिर्विवृतं निर्मूलकल्पनं दृढयन्ति । यदि कोपि विद्वान् विद्वांसमन्यमुपदिशति तस्योपदेशस्तत्कालप्रचलिते व्याहारे भवेदिति स्वभावसिद्धमेव । उपदेष्टु-

रुपपत्तिप्रदर्शनाय शास्त्रादिश्लोकसूत्रादीनां निदर्शनानि स्वोक्तमुपपादयितुं वा तत्र तत्तन्मूलवाच्येव वोऽसुवति । एवमेव श्रीकृष्णस्यार्जुनस्य च संवादस्तदानीं व्यवहृतेऽभूत् संस्कृते प्राकृते वा यथोचिते । यदा व्यासेन समग्रमेव महाभारतं पद्यरूपं व्यधायि तदन्तर्वर्त्तित्वात्कृष्णार्जुनसंवादोऽपि गीताभिधस्तथैव निवद्धः । त्रिकालज्ञः स ऋषिरस्य संवादस्य महत्वं सर्वोपयोगित्वं च मत्वा तस्य गीतेति पृथगपि नामाकरोत् । महत्त्वमस्यां गीताया एतेनैव ज्ञायते यत्स महर्षिः ७४५ मितत्वमस्याः पृथगदर्शयत् । ये च तदा प्रवर्त्स्यमाने युद्धे रणक्षेत्रे ७४५ श्लोकमिताया गीताया उपदेशोऽलब्धसमयः सम्भवतीति तर्कयन्ति ते सर्वास्ता अवस्थां न जानन्ति यास्तदा वस्तुत आसन् । त इत्थं मन्यमानाः प्रतीयन्ते तदार्जुनो दृढयुयुत्सनोदितः समयोल्लङ्घनमसहमानः सरसं गीतासंवादमुपचक्राम श्रीकृष्णश्च तथावस्थं तं विज्ञायोपदेशं झटिति समापयदिति । वस्तुतस्तु मध्यमपाण्डवो दयाशोकादिभिस्तथाऽऽक्रान्तो यथा सर्वथैव युयुत्सां जहौ । अतस्तदा समयलाभालाभजिज्ञासैव नोपपद्यते युद्धारम्भस्यैव सन्दिग्धत्वात् ।

भगवान् श्रीकृष्णः स्वयमपि नैतन्निश्चिकाय यत्तत्कृतेनोपदेशेनार्जुनो युद्धे पुनर्नियुक्तो भविष्यति न वेति । अथवा तादृग्दुर्बोधविषयज्ञापनं मुहूर्त्ते मुहूर्तेषु दिने दिनेषु वा फलं दर्शयिष्यति । यतो वह्वध्यात्मज्ञानमुपदिश्यापि स स्वं वैराजं रूपमदर्शयित्वा नार्जुनस्त्यक्तां युयुत्सुतां त्यक्ष्यतीति मेने । ततस्तस्मै तद्द्रष्टुं प्रभूकरीं दिव्यां दृष्टिं दत्वा तददर्शयत् । ततश्चान्येनोपदेशादिना यदन्यथाशक्यमासीत्तच्छक्यत्वमलम्भयत् । यतो-

र्जुनो भूयो युद्धाय सज्जोऽभवत् । ततः पूर्वं न कृष्णो न चार्जुनः सम्वादकालपरिमाणं कियद्भविष्यतीति ज्ञातवन्तौ । यदि नामैतावता गीतोपदेशेनार्जुनस्य ते ते सन्देहाश्छिन्ना नाभविष्यंस्तर्हि श्रीकृष्णो दिनद्वयं ततोप्यधिकं कालमुपादेक्ष्यत् । तावानेव विलम्बो महाभारतीयस्य युद्धस्याप्युपक्रमावसानयोरभविष्यत् । न ह्युभये पाण्डवकौरवा अष्टादशसु दिनेषु युद्धं समाप्यमिति कामपि सविदं व्यधुर्न च तेऽन्यः कोपि युद्धसमापनकालं निर्णेतुमशकत् । अर्जुनस्तु तदा पृच्छाः कर्त्तुं प्रतिवचांसि श्रोतुं लब्धक्षणः स्वतन्त्रोऽन्तरायासम्भविनि स्थानेऽवर्तत । यतोऽर्जुने चिरं युयुत्सां नाधिगतवति गीतोपदेशस्य वृद्धिरपि भवितुं शक्येति पूर्वमुक्तमस्माभिः एवं तथा कृतेऽपि युद्धानुपक्रमो युद्धं विकारयितुं नाशकत् । श्रीकृष्णस्त्वर्जुनहस्ताभ्यां योद्धुं विजयं लब्धुं राज्यमवाप्य तत्पाण्डवेभ्यो दातुं दृढमियेष । गीतोपदेशं श्रुत्वाप्यर्जुनो यदि मुक्तसंप्रहरण एवावर्त्स्यत्तर्हि कृष्णोऽर्जुनेन विनापि युद्धमकारयिष्यदकरिष्यद्वा । यतो नान्येनोपायेन तदा प्रवर्धमानाधर्मनाशः सम्भवीबभूव । एतेन वयं ब्रूमो ये पूर्णं गीतोपदेशं युद्धभूमौ समयाभावेनैवासम्भवं मन्यन्ते ते तास्तास्तत्रत्या बाह्याभ्यन्तरा अवस्था न बोधन्तीति । प्रकल्प्यतामेतद्यदुभये पाण्डवकौरवा याते दिनस्य प्रथमे मुहूर्त्ते युद्धोपक्रमो भवितेति निर्णिन्युः । किन्तु तदा नेदानीमिव यदा कदाप्यनियमेनाग्नेयविस्फोटगोलकवर्षणरूपामानुषं कर्मापि युद्धनाम्नाऽभ्यधीयत । तदातु युद्धनियमा इत्थमासन् । —सेनापतयो युद्धक्षेत्रे पूर्वमवातरन् । विशेषाणि कर्त्तव्यान्यन्येभ्योऽज्ञापयन् । ततश्च युद्धारम्भसंज्ञाः सर्वज्ञेया अदुः । एतेष्वकृतेषु

पुरोवस्थितेष्वपि प्रतीपेषु युद्धानि नैवारभ्यन्त । ईदृश्यामवस्थायां वयं निश्चयेन ब्रूमो यदुभयोः सेनयोर्न कोपि तावद्युद्धमारब्धुमुदसहत यावदर्जुनो नायकाग्र्यैको विषण्णो मुक्तशस्त्रो विरतयुयुत्सश्चासीत् । अथ च तस्मिन्युद्धे बह्व्यो युद्धाग्रभूमय आसन् । सर्वासु तासु महत्यः सेनाः सज्जा अभूवन् । एतत्सर्वमवगत्य कृष्णार्जुनसंवादसंबद्धाः संशया उत्पद्यन्त एव । निश्चित एव समयेऽपि चेद्योद्धव्यमावश्यकं ततोऽप्युभयोः सेनयोर्मिथोऽभिमुखं स्थितयोरर्जुनविषादेन कर्तव्यमूढयोः सत्योर्मुहूर्तद्वयं मुहूर्तत्रयं वा कृष्णस्यार्जुनं प्रत्युपदेशो न सन्देहमुद्भावयति । ये केचन तादृशे समये श्रीकृष्णस्यार्जुनं प्रति गीतोपदेशं ब्रह्मज्ञानसनाथमनवसरं कालक्षेपासहं च वदन्ति ते किं कृष्णमज्ञातशास्त्रोपदेशाभिनयं कुर्वन्तमर्जुनं च मन्दप्रज्ञं मन्यन्ते । येन गीतोपदेश उभयोरयोग्यत्वाद्बहुदिनसमाप्यो भवेत् । यदा बहवो लब्धयशसो विद्वांसोपि पूर्वमस्माभिरुक्तां निर्मूलां कल्पनां सत्यां मन्यन्ते इति वयं पश्यामस्तदा दुःखाश्चर्ये अस्माभिरनुभूयेते । यतस्ते नेदं जानन्ति यन्न कृष्णः प्राकृत इवोपदेशकृन्न चार्जुनोऽनधिगतबहुश्रुतोऽमेधावी चासीत् । यद्वा त इत्थं मन्यन्ते यथेदानीं प्रायः गीताकथां कुर्वाणानां पण्डितानां पुरः सर्वे श्रोतार उपविशन्ति पण्डिताश्च बहुविस्तरा गीताटीकाः पठन्तो व्याख्यान्तश्च स्वोक्तैरुदाहरणैः सह तत्र बहूनि दिनानि यापयन्ति । तथैव श्रीकृष्ण आसन उपविष्टोर्जुनश्च साम्प्रतिककथाश्रोतृवदुपविष्ट आसीदिति । ते तथैवाभ्यस्तगीताश्रवणा वराका कृष्णार्जुनयोर्महत्वं न विजानन्ति । अतस्तेषां कल्पना विचित्रा निर्मूलाश्च वास्तविकीमितिहासावस्थामुपेक्षन्ते च ।

## ३० श्रीकृष्णार्जुनसंवादे लग्नः समयः

एवं विधा अप्यवसरा भवन्ति येषु विद्वानपि स्वं मनः शोकेन कार्यलग्नं कर्तुमक्षमो भवति ततश्च सोऽवस्थाभिः प्रमत्त इव भवेत्। यश्च तस्य मनः शान्ति लम्भयितुमिच्छति तं च कर्मक्षमं चिकीर्षति तदा स तमनुनेतुं शासितुं वा स्वभावत एव मातृभाषां व्यवहृतव्याहारं वोपयुङ्क्ते। तादृश्यक्षेपसहे काले न कोपि प्राज्ञश्छन्दोरचनया पाण्डित्य प्रदर्शनरूपैस्तैश्छन्दोभिरेव किमपि वक्ष्यति। अनेनैव नियमेन प्रचलितं गीतापाठं पद्यात्मकं कृष्णार्जुनादिमुखनिःसृतं मन्यमानाः स्वमतमसत्यं मन्यन्ताम्। अस्माभिस्तु पूर्वमुक्तमेव व्यासर्षिरेव कृष्णार्जुनसंवादं पद्यमयं विधाय गीतात्वमलम्भयदिति! सम्प्रति यन्निश्चिचीषामस्तदेतत्।—कियद्विस्तर आसीत्कृष्णार्जुनसंवादः कियान्कालश्च तस्मिन् संवादे लग्नो यस्य ७४५ पद्यानि महर्षिणा व्यासेनोपनिबद्धानि। अनुपात्रं बहूनां मतं यदि मन्येत तर्हि स संवादो केवलं कतिपयान् मुहूर्त्तान् किन्तु द्वित्राणि दिनान्यपेक्षते।—इत्यादि पूर्वं दर्शितमेव। सम्प्रति वास्तविकं कालपरिणामं सोपपत्ति निश्चिनुमः कल्प्यतामत्र—देवदत्तयज्ञदत्तौ दुरधिगमं कमप्यध्यात्मराद्धान्तं श्रुत्यादिराद्धान्तं वाधिकृत्य संवदतः। तत्र यज्ञदत्तो विनीताल्पभाषी यथा गीतोपदेशकालेऽर्जुनो येनोक्ताः ५७ एव श्लोका गीतायां सन्ति। देवदत्तश्च वाग्मी विस्तृतोचितोपपन्नवाक् सर्वागमविदुपदेष्टा यथा तत्रैव श्रीकृष्णो येनोक्ताः श्लोकाः ६२० वर्तन्ते। बहुश्रुतत्वान्निश्चितमेव स होराधेन बहुविस्तरमपि वक्तव्यं वक्ष्यति। तदेव तदुक्तं यदि पद्यैर्निबद्धं कोपि विद्वान् कवियतेत तर्हि निश्चयेन वयं

ब्रूमस्तदस्यवचनार्थोऽजितमपि सहस्रमितेषु पञ्चदशशतमितेषु वा पद्येषु पूर्णं व्यक्तं भवेत्। महता विदुषा वाग्मिना होरार्धेन यदुक्तं तल्लिप्यामाहितं कियन्मानं भवतीति सम्प्रति परिचित-संक्षेपलिपयो दृष्टश्रुतसवाक्चलचित्रपटव्याहारा ज्ञातुं शक्नुवन्ति विवेकिनः। यद्वयमितिहासादिषु शास्त्रेषु च पश्याम ऋषयो मुनयश्च पूर्वं महतीं शक्तिसम्पदं दधुरिति तत्सत्यमेव। यतस्ते कालत्रयवर्त्ति सर्वमजानन्। यदि सम्प्रत्यपि वयमलोकसामान्य-बुद्धिशक्तिविज्ञानविभवान्नॄन्सामान्यानपि पश्यामस्तर्हि पूर्वं ऋषय ईश्वरभक्ता योगिनो ज्ञातवेदवेदाङ्गरहस्याः साक्षात्कृतब्रह्माणो विहितबहुयज्ञतपसो जितेन्द्रियास्तथा न भवेयुरिति वचनं निर्मूलमेव। श्रीमहर्षिर्व्यासस्तेष्वृषीणामन्यतमः। महाभारते वयं पठामः सोऽन्धाय धृतराष्ट्रायादभुतां दृष्टिशक्तिमदादिति। स एव मन्त्रबलेन युद्धे मृतान्योधान्पुनरुदतिष्ठिपत्। तेषां योधानां स्वे सर्वां रात्रिं तैः सहालपंस्तत्तस्यैव योगप्रभावमाहात्म्यम्। युद्धविरामावधि संजयोऽन्यमनःस्थं सर्वं यज्ज्ञौ तदपि तद्दत्तायाः शक्तेः फलम्। तन्नात्राश्चर्यं किं यत्स सर्वमेव भूतचरं साक्षादिव न चैकमपि वृत्तं तस्य ज्ञानचक्षुर्नापश्यत्। एतेनैतत्प्रमाणीक्रियते यद् व्यासः कृष्णार्जुनसंवादं पूर्णं जज्ञौ तमेव च ७४५ श्लोकेषु निबबन्ध। स च संवादो होरार्धमात्रस्थायी न ततोऽधिककालापेक्षी बभूव। साम्प्रतमपि बहवो देवभाषाभिज्ञा गीतां कण्ठस्थीकृत्य तस्याः पूर्णं पाठमेकहोरामिते काले कर्त्तुं शक्नुवन्त्येव। तेनाप्यस्मदुक्तिरियं प्रमाणीभवति। अस्मादतो गीतोपदेशकालमानमधिकृत्य न विप्रतिपत्तव्यम्। अस्माभिरेवमुक्तेऽपि ये सन्दिहन्ति। ते जानन्तु तमवसरं यदार्जुनो

गुर्वादीन्स्वबाणलक्ष्यीभविष्यतोऽपश्यत्तदा शोकविषाद्पिहित-मनोभावो वीतसर्वसुखलिप्सो युद्धमचिकीर्षन् गांडीवं तत्याज तदा श्रीकृष्णो होरार्धमितं होरामितं वा कालं गीतामुपादि-शच्चेत्तर्हि किमनवसरमिति । अर्जुनमनस्यपि तादृशानां भावा-नामुत्पत्तिर्नानुचिता यतो युद्धे जाते बहुलक्षसंख्येषु वीरेषु तत्र व्यापृतेषु पञ्च दशैव वा वीरा अन्ते अवाशिष्यन्त । एतदपि खेदावहं महद्यदस्मिन् विषये बहवोऽस्माकं मान्या उपदेष्टार-श्चाविचार्यैव गीताजातीयेऽविनाशिनि ग्रन्थेप्यनुचितानि मतानि दर्शयन्ति । भूयश्चैतन्मनः खिन्नयति यत्त एव भगवतः श्रीव्या-सर्षेर्वैदुष्ये योगशक्तौ च सन्देहाधिक्षेपौ बिभ्रति । अयं हि पाश्चात्यशिक्षणसरणेः परिणामः । यतस्ते पाश्चात्यानां विदुषां पदव्यां पदं निदधति ।

## ३१ यथा गीतायां कृष्णवचनानि छन्दःसु पठ्यन्ते तथैव श्रीकृष्णेनोक्तानि बभूवुः कच्चित् ? ।

अविचारितान् परंपरागतान् विकृतानपि धर्मराद्धान्तान् ये यथार्थान्मन्यन्ते ते बहवो विद्वांसोपीत्थं ब्रूवते-- "गीतायां श्रीकृष्णोक्ता ये श्लोकाः पठ्यन्ते ते वस्तुतः श्रीकृष्णमुखाच्छ-न्दोमया एव निःसृताः। एवमसति कृष्णोक्तत्वाद्यद्गीताया माहात्म्यं तद्धीयते। यतो नास्त्यत्र सन्देहलवोपि यत् श्रीकृष्णः सर्वनिगमा-गमज्ञानविज्ञानसम्पन्नो योगीश्वरो यं कमपि विषयं छन्दोनिबद्धं विधाय वक्तुं शशाकेति। एवं सति श्रीव्यासेन ते श्लोकास्ततः परं निर्मिता इत्युच्येत चेत्तर्हि श्रीकृष्णवचनत्वात्तेषां ये महत्त्वग्राह्यत्वे ते न तिष्ठतः" इति । अत्रोच्यते ।—एष तु बहोः कालाद्-

स्मिन् भारतवर्षेऽद्यावधि नियमोऽप्रतिहतगतिर्यद्राजव्यवहारादि-
ष्य एकैव भाषोपयुज्यते । किन्तु देशविभागानुसारं मानवाः
स्वस्वव्यवहारेषु विभिन्ना भाषा उपायुञ्जन् । महाभारतकाले
राजव्यवहारभाषा ग्रन्थनिर्माणभाषा कविभाषा च देवभाषै-
वासीत् । किन्तु देशविभागानुसारं सर्वैरेवान्यत्र स्वाः प्राकृत-
भाषा उपायुज्यन्त । राजव्यवहारभारती तु विद्वद्भिरधिकृतैः
कविभिर्ग्रन्थनिर्मातृभिर्वाहिकैरत्रागतैश्चोपायुज्यत । सम्प्रति प्रा-
यस्तादृशी वर्तत आङ्ग्लभाषा भारते । एतस्यामेव सहस्राणि
पुस्तकानां गीर्वाणवाचि निबद्धानामपि प्रकाश्यन्ते । अन्यै राष्ट्रैः
सह भारतराज्यस्य राजादिव्यवहारश्चैतस्यामेव भवति । किन्तु
विविधदेशभागस्था जनाः सम्प्रत्यपि स्वा भाषा उपयुञ्जते गृहे-
ष्वन्यकार्येषु च । तथैवाद्य गतेषु पंचसहस्रमितेषु वत्सरेषु महा-
भारतकालेऽपि संस्कृतवागेव राजविद्वदादिविशेषव्यवहारतां
लभमानाऽऽसीत् । सम्प्रत्यपि संस्कृताद्यन्यभाषाणां विद्वत्तमा
अपि स्वैरन्यैश्च सह सामान्यव्यवहारान् स्वस्वदेशभागभाषयैव
कुर्वन्ति । अर्जुनोऽपि विद्वत्तम आस । किन्तु तादृशे समये श्री-
कृष्णस्तस्मै न स्वं विद्वत्त्वं दर्शयितुमियेषेति स्वाभाविकमेव ।
यतः कोऽपि विद्वांश्छंदोरचनां कर्तुं प्रभुरपि सर्वदैवागसरमणिचा-
यैव न सर्वत्र स्वकवित्वं दर्शयतीति सदसद्वा न मानवस्वभाव-
मुज्झति । यदि श्रीकृष्णस्तदा छन्दोमयमेवोक्तवानिति मन्यते
तर्हि कथं संजयोऽपि विद्वत्त्वाच्छन्दोमयं स्वगिरा विधाय नो-
क्तवानित्यादयः सन्देहा भूयोऽपि दुरपाया भवन्त्येव । अतः
शोकविषादमोहदयाभिभूतमर्जुनं प्रति कृष्णोपदेशः श्लोकेष्वेवाभ-
वदिति यदि केनापि मन्येत तत्सर्वथा मर्कटचेष्टानुकरणं हास्यकृच्च ।

## ३२ श्रीकृष्णोपदेशे श्लोकेष्वमते गीताया महत्त्वं हीयते कच्चित् ?

उपनिषत्स्मृतिवाल्मीकिरामायणमहाभारतद्पुराणादयो ग्रन्था आप्तवाक्यत्वात्प्रमाणतमत्वं भजन्त्वेव तेषां मान्यत्वं च,श्रीशङ्करब्रह्म-विष्णुदेवर्षिवचनत्वान्न विवादावहम्। किन्तु तेषु ग्रन्थेषु प्रायः पद्या-दिकर्त्तारो न साक्षाद्वक्तारो बोद्धव्या वा तत्र तु केवलं ग्रन्थकर्तॄणां वक्तृबोद्धव्याशयप्रदर्शयितॄणि वचनानि भवन्ति। एतेन तद्वक्तॄणां वचनानां मान्यत्वं वास्तविकत्वं फलं च नोनतां यान्ति। न च तदुपदेशादीनां प्रामाण्यादि व्याहन्यते। एवमेव तदानींतन व्याहारे ये श्रीकृष्णार्जुनयोरुक्तिप्रत्युक्ती संस्कृते प्राकृते वाऽभूतां व्यासनिबद्धत्वात्ते न जहितो महत्वं प्रामाण्यं च। कस्मिन्नपि व्याहारे तद्गौरवावहमेव। भगवान् श्रीकृष्णो विष्णुरेव मनुष्यरूपेण वर्तमानः किन्तु जन्मना देहेन च क्षत्रियोऽभवत्। एवं सन् सर्वेषां वर्णानामुपदेष्टृत्वमाचार्यत्वं चाचीकमतेति तस्य वर्णाश्रमादिधर्मोपदेष्टृत्वान्नैसर्गिकमेव। श्रीकृष्णोऽर्जुनमुपदिशन्नपि नोपदेशकर्म स्वस्य क्षत्रियस्य मेने। तदा त्वापतिते काले स तथाऽकरोत्। स भगवान् स्वयमेव 'मदुपदिष्टमुपनिषद्ब्रह्मसूत्रादिषु विद्यत इति वदन् तेषामेव प्रमाणतमत्वं दर्शयति। गीता अ० १३ श्लो० ५। यतस्तादृशस्योपदेशस्य सर्वोपयोगित्वे सर्वग्राह्यत्वे च ब्रह्मसूत्रा-दिष्वधीयमानेषु चतुर्णां वर्णानां कोपि न धर्मशास्त्रोल्लङ्घनश-ङ्कामुत्थापयति। अतएव गीतोपदेशः सर्ववर्णोपादेयस्तदैवास यदा स व्यासेन पद्यतामानायि। क्षत्रियाः प्रायेण सुतान् सं-बन्धिनश्च ब्राह्मणैः कृतमुपदेशं गृहीतुं प्राशासुः। यतस्ते ब्राह्म-

णनिघ्ने एव स्वतेजोयशसी अमन्यन्त । एवं स्थिते वयं विचारयामश्चेद्भगवतः श्रीकृष्णस्य गीतोपदेशलक्ष्यं सर्ववर्णोपयोगि नाभविष्यद्यदि श्रीव्यासर्षिः कृष्णोक्तं ६२० श्लोकेषु न न्यधास्यत् । तथा च श्रीकृष्णोक्तं गीतायां दृश्यते " उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः " ततःपूर्वं च " तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया " इति। इत्यादि भगवदुक्तेन च पूर्वोक्तं प्रमाणीभवति । ततो गीता सर्ववर्णग्राह्या सम्पद्यते न केवलमर्जुनग्राह्यैव । यदिनाम सर्वं महाभारतं व्यासनिबद्धं किन्तु गीतायां कृष्णवचनश्लोका न व्यासनिबद्धाः श्रीकृष्णेन छन्दोमया एवोक्ता इति मतमपि भवेत्तर्हि तन्महद्वैषम्यं गमयति । यतः सम्पूर्णस्य ग्रन्थस्यैककर्तृकत्वमेवोचितम् । श्रीकृष्णोक्तं गीतायां व्यासनिबद्धत्वान्न महत्वमुज्झति मनाक् । यतः स भगवान्नरदेहो विष्णुर्धर्मशास्त्रोक्तं धर्ममुत्थापयितुमेवावतीर्ण आस । अतो ब्राह्मण एवोपदिशेत्सर्वान् वर्णानिति धर्मनियमस्तेनैवोपेक्षितः स्याद्यदि गीताश्लोकास्तन्निबद्धा एवन मन्यन्ताम् ।

## ३३ पर्शु ( पर्शियन ) भाषायां विहितः ७४५ श्लोकात्मिकाया गीताया एवानुवादः ।



महम्मदीयेषु सम्राट्सु भारतं शासत्सु उपनिषदां गीताया अन्येषां चार्यधर्मादिग्रन्थानामनुवादा व्याख्यानानि च व्यधीयन्त । यतः स्वधर्मसम्प्रदायादिपक्षपाता अपि ते भारतीयानामार्याणां धर्माचाराध्यात्मविषयग्रन्थान् दृष्ट्वा तदाकृष्टचेतसस्तज्जिज्ञासापरा अभूवन् । वाराणसीवसतिना श्रीमताऽर्वपर्शुवाङ्मयमहाविदुषा मुन्शी महेशप्रसादमहोदयेन तेषां कतिचिदनु-

वादाः स्वयं दृष्टाः । ते च मालतीसदनाभिधे पुस्तकालये विद्यन्ते । तेषामन्यतमस्य निर्मातृनामज्ञापनं तत्रैव दृश्यते । तद्यथा—"अबुलफ़ज़लाभिधस्य सम्राज आदेशेन पर्शुभाषायां ७४५ श्लोकात्मिका गीताऽनूदिता ।"

पर्शुभाषायां गीतानुवादस्य द्वौ ग्रन्थौ सम्प्रति लभ्येते । तयोरेक अबुलफजलेन सम्राजा कारितोऽन्यो फैजीत्यभिधेन विदुषा च कृतः । उभावपि भारतीयसाम्राज्य-कार्यविवरणले-ख्यालये ( ईन्डीया ओफीस ) यो पुस्तकालयो लन्दन नगरे-स्ति तत्र क्रमेण १९४९, १९५० संख्याभाजौ वर्तेते । उभावपि ७४५ श्लोकात्मिकाया एव गीताया अनुवादरूपौ । काश्यामा-नन्दगुहामधितिष्ठद्भिः श्री ब्रह्मचारी पंचोली हरिरामजी महाराज इत्येतैर्ज्ञापितेन मयैतदपि ज्ञातमासीद्यद्वाराणसीनृपति-महोदयानां पुस्तकालय एकं पर्शुभाषयाऽनूदितं गीतापुस्तकम-वर्ततेति । सोऽनुवादो गीतायाः ७४५ श्लोकानामेव शाह अली दस्तगीरकृतः । तत्रैव तस्य पुस्तकस्य क्रमसंख्या १६५, १६६ अस्तीति । त एव ब्रह्मचारिणस्तस्य महार्घस्य पुस्तकस्य प्रति-लिपिं कर्तुं काशीमहाराजेन मामनुगृहीतुमनुमता आसन् । किन्तु मादृशां शोकावहं तेषां नृपतीनां लोकान्तरप्रस्थानं तस्य ग्रन्थस्य प्रतिलिपिलाभेऽन्तरायतामापत् । मद्रासपत्तने प्रकाश्य-मानं नव्यप्रवृत्तिपत्रं 'हिन्दू' इत्याख्यं प्रागस्माभिः प्रकाशितं व्याख्यातं च गीतापुस्तकं समालोचयत्तस्य दोषाभावाभावं दर्शयच्चास्मत्कृतोल्लेखानामेषां पर्शुभाषायां गीतानुवादानां विषय समशेत । तस्य संशयं निराकर्तुं तस्यैव पत्रस्य १५-८-१९३७ तमायां खिष्टीयतिथौ वाराणसीयहिन्दूविश्वविद्यालयस्थाः श्री

के, ह्वी, रङ्गस्वामी अय्यङ्गर महोदया निबन्धमेकं प्राकाशयन् । तत्र विद्यमानमाशयितमित्थम्—"भारतीयेतिहासज्ञा विद्वांस अबुलफ़जलेन कृतस्य तस्यैव भ्रात्रा फैजीत्यभिधेन कृतस्य च पर्शुभाषायां गीतानुवादयोर्विद्यमानतां जानन्ति । तयोः प्रथमो-गद्यगिरा विहितो न चाद्यापि मुद्रितः । फैजीकृतोऽनुवादः पद्येषु वर्त्तते । वाराणसीस्थहिन्दूविश्वविद्यालयेऽध्यापयमानः पर्शुभारतीसाहित्यस्य विद्वत्तमः श्री मुन्शी महेशप्रसादमहोदयो मां ज्ञापयति यत्फैजीकृतः पर्शुभाषायां गीतानुवादो बहुत्र बहु-कृत्वश्च मुद्रितः । तद्यथा लवपुरे ( लाहोर ), जलन्धरपत्तने प्रयागपत्तने ( अल्लाहाबाद ), ग्वालियर राजधान्यां, जयपुरे च तत्पुस्तकानि मुद्रितानि । एतेष्वनुवादपुस्तके मुद्रितेषु सत्स्वपि डाक्टर नागराजशर्मणः पर्शुभाषापण्डिता अस्यानुवादस्य सत्ता-मपि न जानीयुरित्याश्चर्यम् । शाह अली दस्तगोराभिधेन यः पर्शुभाषायां गोतानुवादः कृतः सोऽपि मुद्रणप्रकाशने अपेक्षते । श्रीराजवैद्यैः ( जीवराम कालिदास शास्त्रिभिः ) उल्लिखितं तदपि यद्वाराणसीनरेशस्य ग्रन्थसङ्ग्रहालये तत्पुस्तकमस्तीति नूनं यथार्थम् । अद्य कतिपये मासा अयू राजवैद्यमहोदया अपि तैर्महेशप्रसादोपाध्यायैर्गीतायाः पर्शुभाषानुवादस्य विद्य-मानतां ज्ञापिताः । एतदपि तैरेव ज्ञापितं पर्शुभाषानुवादं दृष्ट्वा प्रचलिताया गीतायाः पाठांशा बहवो भिन्नाः प्रतीयन्त इति । तैः संकेतितमप्यासीत्तस्मिन्ननुवादेऽधिकाः श्लोका इति । तन्नि-शम्य ममापि मनस्तस्मिन्विषय आकृष्टम् । मया च तेभ्य आशयितं यत्तैः प्रचलितं तत्रत्यं च पाठमधिकृत्य भेदान्प्रदर्श्य च कोपि निबन्धो लेख्य इति । अहं तं निबन्धं वाराणसीय-

हिन्दूविश्वविद्यालयनिबन्धपत्रिकायां प्रकाशयिष्यामीति तेभ्यः प्रत्यश्रौषम् । तत्र तेषामासीदनुमतिः । किन्तु ते तं निबन्धं लिखितुं नाशक्नुवन् । यतस्ते पर्शूर्दूभाषयोः कविताचणस्य गालिबमहोदयस्य गौरवान्वितं चरितं शीघ्रं समापयितुं लग्नानेहसो वर्त्तन्ते । अतः पूर्वोक्तो निबन्धो यदा कदापि प्रकाशितो भवेत्स विद्यमानान् गीतायाः पर्शुभाषानुवादानधिकृत्य सन्देहान्निराकरिष्यति । तेषां बहुमतगीतापाठस्य च कियान् भेद इति च व्यक्तं करिष्यति । (प्रकाशिते तस्मिन्निबन्धे) सर्वव्यवहृतं पाठमधिकृत्य यज्ज्ञातव्यतमं ज्ञातं भविता तत्र श्री राजवैद्य महोदयैर्दर्शित एव गीताविषये नवः (उपयोगी) पादन्यासः श्रेयोभाग्भविता । "

## ३४ अलबरूनी महाभागस्य समये ७४५ श्लोकात्मिका गीता ।

प्रसिद्धस्तदानीन्तनेतिहासविदल्वरूनीमहाभागो वैक्रम्यामेकादश्यां (खिस्तीय १ ३० तमेऽब्दे) शताब्द्यामजनि । स चिरं भारतेऽतिष्ठत् । स च गीर्वाणवाङ्मयमधीत्यार्याणां बहून् धर्मग्रन्थानवागमत् । तेनार्वभाषया प्रसिद्ध एको ग्रन्थो रचितो यस्याङ्ग्लभाषाऽनुवादः "भारतेऽल्वरूनी" (अल्बरूनी इन इंडिया) इति नाम भजंल्लन्दननगरे १९१२ खिष्टाब्दे पुस्तकसान्मुद्रितः तस्माद्ग्रन्थादेतज्ज्ञायते यदल्वरूनीमहाभागः ७४५ श्लोकात्मिकामेव गीतामध्यगीष्ट । यतस्तेनानूदितास्तस्य गीतानुवादे दृश्यमानाः कतिपये गीताश्लोकाः प्रचलितायां गीतायां न सन्ति । अथ च प्रचलितगीतातो बहुत्र विषयभेदश्च वरीवर्ति ।

## ३९ यदि गीतायाः ७४५ श्लोकास्तर्हि किमर्थं भगवता श्रीशङ्कराचार्येण ७०० एव मताः ? ।

इतः २५०० वर्षाणि पूर्वं भगवता श्रीशङ्कराचार्येण ७०० श्लोकात्मकं गीतापाठं प्रमाणीकृत्य व्यासोक्तं गीतामान ७४५ श्लोकमितं कथमुपेक्षितमिति कतिपये संशेरते । तदधिकृत्यात्र किमपि ब्रूमहे । श्रीशङ्करकृताद्गीताभाष्यादेतत्तु न नावगम्यते यत्तन्निर्माणकाले बहून्यन्यानि गीताभाष्याण्यासन् । क्व तानि सम्प्रति । नाद्य तेषां केनाप्येकमपि लिखितं मुद्रितं वा पुस्तकं दृश्यते । शतेभ्यो वर्षेभ्यो लेखकपरंपराप्राप्तं किमपि पुस्तकं भिन्नरुचिबहुविद्वत्पठितं च तन्नूनमुज्झितबहूवंशं परिवर्त्तितबहुपाठं च भवतीति नानैसर्गिकम् । तथा च यथा पाठाद्यन्वेषणनिर्णयादिचिकीर्षाऽद्य विदुषामस्ति तथा न पूर्वमासीत् । ततश्चैकस्मिन्देशभागे यानि पुस्तकानि प्रचलितान्यासंस्तानि प्रायः तद्देशभागसीमानं नात्ययुः । इदानीमपि गीतापाठनिर्णयचिकीर्षा तदाप्रभृत्येव प्रचलिता यदा काश्मीरपाठमुद्रणमजनि । एतेन स्फुटं ज्ञायते शतानि वर्षाणां काश्मीरेषु प्रचलितः पाठो न दक्षिणदेशे प्रचलित आसीदिति । तत्रैव च भगवान् श्रीशङ्कराचार्य आविरभूत् । एतदपि नासम्भवं श्रीशङ्करो बह्वन्यकार्यव्यापृतो द्वात्रिंशत्तम एवायुषो वत्सरे ब्रह्मतामयात्ततश्च गीतापाठाद्यन्वेषणसमयमेव नालभत । अतस्तेन स्वहस्तगतपुस्तकपाठमनुसृत्यैव गीताभाष्यमकारि । अथ च बहवो राजानोऽधिकृताश्च श्रीशङ्कराचार्यस्य प्रभावेण तस्य पुरो नतशिरस आसन् । ते तदुक्ते संशयच्छायमपि सोढुं नैच्छन् । अतो न

कोपि शङ्करभाष्यमते गीतापाठे संशयपरिविवृत्से प्रकटयितुमु-दसहत । यतस्ततो राजादिदण्डभयमप्यासीत् । तत आरभ्या-द्यावध्यपि बहुत्र श्रीशङ्करादिमते पाठे संशयोत्थापनं धर्मभाव-विरोध्यमन्यत मन्यते च । श्रीशङ्कराचार्यादर्वाक्-बहूनां धर्ममता-नामुत्थानात्तन्मतस्य च केन्द्रीभावान्न केनाप्यत्र निर्णिनीषोद्भावि-ता । बहूनां धर्मसंप्रदायानामाचार्या अनुयायिनो विद्वांसश्च शङ्करसम्मतमेव गीतापाठमनुसृत्य तत्र व्याख्यां व्यधुः । तन्मतं गीतापाठमानं च ७०० श्लोकात्मकमासीत् । गीताया मानविषये शंकरमेव प्रमाणं मन्यमानरन्यैराचार्यैः पण्डितैश्च गीताश्लोका-र्थास्ततो भिन्नाः स्वसम्प्रदायराद्धान्तपोषणपरा जनान्स्वराद्धा-न्तेष्वाकृष्टान् कर्तुं विहिताः । यतस्तैः स्वमतोन्नत्या एव जीवि-तानि लागितानि बभूवुः । न तैर्गीतामधिकृत्य पाठाद्यन्वेष्टुं मतयो नियोजिताः । अन्ये सुधियो रसिकाश्चाद्यावधि स्वल्पा-मेवापेक्षां तत्र विहितवन्तः । न च ते तत्कर्तुं लब्धसमया आसन् । ततस्ते श्रीशङ्कर इव ७०० श्लोकान् गीताया अम-न्यन्तेति स्वाभाविकम् । अल्पीयानेवाद्य समयोऽयाद्यदा गीतायाः कतिपयानि प्राचीनानि हस्तलिखितानि पुस्तकानि लब्धानि । अद्यापि लभ्यन्ते । ततश्च बहोः कालात्पठ्यमाना गीता न पूर्णेति वस्तुतो गीतापाठः ७४५ श्लोकात्मक एवेति तथ्यं ।

## ३६ उपसंहारः ।

अद्य सप्त वत्सरा अयुस्तदाऽस्माभिः १२३६ तमे वैक्रमे-ऽब्देऽङ्कितं पुस्तकमनुसृत्य गीता मुद्रिताऽऽसीत् । तत्र बहवः पाठांशभेदाः कतिपये विद्यमानगीतातोऽधिका अपि श्लोका

आसन् । तावतैव सन्तोषमविधाय वयं पूर्णामेव गीतामन्वेष्टु-मद्यावधि यतमाना आस्म । सम्प्रति सहसैवास्माभिर्भूर्जपत्रेषु लिखितेयं गीताऽलम्भि । अस्य गीतापुस्तकलाभस्य श्रेयोभाजोऽस्माकं सुहृदो वाराणसीपत्तने आनन्दगुहास्थाना ब्र० श्री हरि-रामपंचोलीमहाराजेत्याख्याः सन्ति । ते चातीतेषु पंचषेषु वत्सरेषु बहुना श्रमेण दुर्लभान् प्राचीनान् ग्रन्थांस्तत्र समा-हृत्यास्मभ्यं प्रेषयन्ति । तेषामेवं कृपासौजन्याभ्यामस्मद्ग्रन्थसं-ग्रहालयो दुर्लभानेकशतावश्यकग्रन्थसंपत्तिं धत्ते । तत्प्रहितेषु ग्रन्थपत्रनिचयबन्धनेष्वेकस्मिन्नियं गीता जीर्णशीर्णदीर्णभूर्जपत्रे-ष्ववर्तत । सा चैषास्माभिरवलोकिता । अन्विष्टाया अस्या लाभं वयं दिव्यं वरलाभमिव मन्यामहे । यातेऽस्या महार्घताऽनुमातु-मपि न शक्यते । यत इयमस्मान् पूर्णाया वास्तविक्याश्च गीताया प्रकाशने प्रभून् भावयति । यतस्त्रिंशतो वत्सरेभ्यः ७४५ श्लोकात्मिकाया गीताया अन्वेषणे प्रकृष्टं यतमानानाम-स्माकमत्र सर्वाणि श्रमकर्माणि साफल्येन योजयत्येतद्दिव्यं महार्घं महार्हं च पुस्तकम् । जीर्णदेहमप्येतत्पुस्तकं गीतालाभ-प्रसादेनास्मान् तरुणोत्साहान्विधत्ते । किन्त्वस्माकं प्रयत्ना अर्वपर्शुभाषयोरन्यासु च वाक्सु गीतानुवादादि पुस्तकान्वेषणे प्रवृत्ता एवाधुनापि सन्ति । तेषामवसितिस्तु तेषु सर्वेष्वेव ग्रन्थेषु लब्धेषु भविता । वयं तानि परीक्ष्य तैः सह प्रचलिता-मस्मदीयां च गीतां संगमय्य ततो नवविज्ञेयसनाथं स्वमतं सोपपत्ति विदुषां विचारनिर्णयाभ्यां प्रकाशयिष्यामः ।

१९३६तमे खिष्टाब्देऽस्माभिरेकं तदा लब्धं गीतापुस्तकं प्रकाशितमासीत् । तस्मिन्नस्मदीये देवाङ्ग्लभाषाटीके व्याख्यो-

पपत्तिसहिते विलोक्य हरिवर्षीयाणामस्मत्प्रतीपभूभागवसतीनां च विदुषां तत्रत्यानामेव प्रवृत्तिपत्राणां महानासीन्मतवैषम्यविवादविजिज्ञासानामुद्भवः। स च गीतेतिहासे नवोऽद्भूतश्चासीत्।

ते महाभागा अस्मत्कर्तृकया टीकया सह तां गीतां विहितावसितिं द्रष्टुमीहमाना नूनं वर्वृतति । स्वविचारालंबनभूतस्तेषामद्यावधि यादृशः पाठो लभ्योऽवर्वर्तीत्तेन तेषां तत्र ये भावा उदतिष्ठन्त तत्परिवृत्तिस्तया गीतयाऽस्मदीयटीकाशब्दविवृतिभ्यां भवितेति त आशयानाः प्रतीयन्ते । वयं च तेषां तोषकृतावद्यावध्यप्रवोभुवतस्तत्कृतां क्षमामेव विधित्सितविलंवविहितागोमार्जनक्षमां मन्यमानास्तदनुकम्पामस्मत्सु मनागपि नादृढां जानीमहे । यतः सदाऽनेकनवरूपै रसशालोपयोगविहितगौरवैर्बहुभिरपरिहार्यैः कर्मभिराकृष्टसर्वमनोवाक्कायगतयो वयं न क्षणमपि लभामहेऽन्यकार्येभ्यः । ततोऽस्मभ्यमलध्वीं क्षमां विधाय स्तोकमधिकमवसरं पालयन्तु विद्वांसो गीतापाठादिगवेषणकर्तारश्च । विधेयतमकर्मशतव्यापृतेनापि मया टीकाविवृती कुर्वता सहसैवैषा भूर्जत्वक्षु न्यस्तवर्णा गीताऽलम्भि । प्रसत्तिमगात्तेन चिरालिप्सितेन पुस्तकेन मे चेतः । ततश्च पुस्तकमेतन्न प्रकाश्य प्राङ्मुद्रिताया गीतायाष्टीकाविवृती न बहुफले इत्यहममन्ये । अस्मिन् हि पुस्तकरत्ने सापि गीतान्तर्भवति । अस्यैवाविकलायां टीकायां कृतायां नान्या टीकाऽपेक्ष्यते । नैव चाभिनवटीका प्राक्प्रकाशिताया गीताया व्याख्याताया अस्यामावश्यकतामावहति। अस्य ग्रन्थस्यातोवोपयोगित्वादभिनवत्वाच्च तदुपोद्घातेऽपि बहु परिवर्तनोयं भविता । असहमानमिवाभवत्तदेतत्पुस्तकप्रकाशनविलम्बं मे मनः । विदुषा-

ममले मनसि गीतापाठादिनिर्णयायास्मन्मते वास्तविकीं गीतामिमां चिराद् भूर्जत्वगङ्कनमात्रसत्तां प्रकाश्य प्रसिद्धयामि । ततश्चाद्येयं गीतालोकोपकाशयैव प्रकाशितेति सुधीभिर्मन्तव्यम् ।

विद्वांसो मया नतशिरसा निवेद्यन्ते यत्ते सम्प्रदायादिपक्षपाताग्रहौ विहायास्या वेदव्यासोक्तश्लोकसंख्याभृतो गोताया मूलपाठान्वेषणधिया विदधतु निर्णयमिति । अद्यप्रभृति हीदमेव मम सर्वान्यभावप्रत्याख्यात् कर्म भविता येनास्या गीतायाश्चन्द्रघण्टाटोकां सिद्धिदात्रीशब्दविवृतिं च यथासम्भवं जवेन पूरयितुं शक्तो भवेयम् । एतन्निर्माणे अनुज्झितान्यसर्वकार्यस्य मे वत्सरैकमितः कालोऽपेक्ष्यते । वास्तविकी च सेयं गीता १२३६तमे वैक्रमाब्दे लिखितया गीतया काश्मोरपाठवत्या च संवदति । बहुश्रमेणाकैतवेन टीके विधाय विदुषः सुहृदश्च धर्मवाङ्मयप्रकाशनमात्रो मम प्रयासस्तोषयितेति न संशयः । निर्णयमनसैव स्वाः सम्मतोरनुमतोश्च ममोत्साहवृद्धिविधात्रीस्ते प्रेषयन्तु । यतस्ते तथा सफलं मम श्रमं विधास्यन्ति ।

उपोद्घातमिममविस्तृतं कर्तुकामोऽप्यहं न तथा कर्तुमशकम् । तत् खिन्नमिव जायते मम चेतोऽत्र । किन्तु विद्वांस ऊहापोहमयमुपोद्घातमिमं दृष्ट्वा प्रसीदच्चेतसो भवितार इति मन्ये । सर्वशक्तिरीश्वरो मां संस्कृताङ्ग्लगिरोष्टोकाविवृतिभ्यां सहेमां ७४५ श्लोकमयीं भगवतीं गीतां विदुषां पुरःस्थापनाय शक्तिर्दयादित्योम् तत् सत् ।

राजवैद्यः जीवरामः कालिदासात्मजः शास्त्री

# भोजपत्र–गीतायाः

## संस्कृत प्रस्तावना–शुद्धि–पत्रकम्

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | ४ | गीतावगीत | गीताविगीत |
| ,, | १० | ह्यय्ज्नामा भा | ह्यज्नामाभा |
| ,, | २३ | नवाबोभु | नवोबोभु |
| ३ | ८ | टीकाश्चाव्यधुः | टीकाश्च व्यधुः |
| ४ | १४ | भविष्यन्य | भविष्यन्त्य |
| ५ | ८ | दृशाद्यद्वा | दृशाद्युद्धा |
| ,, | २१ | स्वां | स्वा |
| ६ | ५ | मवभवत् | मन्वभवत् |
| ,, | १५ | भवदितिहा | भवदितीतिहा |
| ,, | १७ | यज्ञारंभप्रवृ | यज्ञारंभे प्रवृ |
| ७ | १५ | शयिष्ट | शयिष्टताम् |
| ९ | ६ | वहून्यूहर | बहून्युदाहर |
| ,, | ८ | पाण्डुवि | पाण्डुर्वि |
| ,, | १२ | स्वप्रयाणा | स्वःप्रयाणा |
| ,, | १५ | द्राधिष्ठ | द्राघिष्ठ |
| १० | १४ | श्रयादृह्य | श्रयाशदह्य |
| ,, | २२ | दकरात् | दकरोत् |
| ११ | ७ | विदूरस्थो | विदूरस्थो |
| ,, | ८ | प्रवृत्ते | प्रवृत्ती |

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ११ | २० | विस्मयत | विस्मर्यंत |
| १२ | १४ | भारत | भारतग्रन्थः |
| ,, | १५ | ऽधितो | ऽधीतो |
| ,, | २२ | क्रान्तयोऽन्या | क्रान्तोरन्या |
| १३ | १४ | सङ्ग | सङ्ग्रं |
| १४ | ८ | लोच्याप्रच | लोच्याद्य प्रच |
| ,, | १२ | यिप्य | यिष्य |
| ,, | १५ | नोपेक्ष्यो | नोपेक्ष्यौ |
| १६ | १ | व्याखात् | व्याख्यात् |
| ,, | ४ | तममेव | तम एव |
| ,, | १७ | जनाना | जनीना |
| १७ | २ | सर्वेषा | सर्वेषा |
| ,, | १४ | मंत्री ऋ | मंत्री ऋ |
| ,, | १८ | वयं ढं | वयं दृढं |
| ,, | २२ | जा | जातेषु |
| ,, | २४ | सोघीतस | सोधीतसं |
| १८ | २० | दष्प्रापः | दुष्प्रापः |
| ,, | २१ | संबाद | संवाद |
| १९ | ७ | क्रृष्णस्य | कृष्णस्य |
| ,, | १७ | पाणामअच्यु | पाणामच्युता |
| ,, | २० | योगशक्तिर | योगशक्तीर |
| ,, | २१ | भवन् | भवन् |

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| २० | २ | रमरामि | स्मरामि |
| ,, | ५ | रयस्तस्याः | रयंस्तस्या |
| ,, | ८ | खिस्ता | खिस्ता |
| ,, | ११ | भन्डा | भाण्डा |
| ,, | १५ | द्वर्पा | द्वर्षा |
| ,, | १६ | ग्रन्थभ | ग्रन्थभा |
| २१ | १ | शदधिकश्लोक | शत्यधिकश्लोकं |
| ,, | १६ | भृन्ति | भृन्ति |
| २२ | १५ | तच्चैव | तच्चैवं |
| ,, | १७ | भदवासरे | मंदवासरे |
| ,, | २० | णामम् | णामम्। |
| २३ | १० | त्यप्रभवाः | त्यप्रभवः |
| २४ | २ | षट्पान्दिकुत्र | षट्पान्दि कुत्र |
| ,, | ७ | रुक्तयो | रुक्त्यो |
| ,, | १३ | श्लोकाः | श्लोकाः। |
| २५ | ८ | भवेत् | भवेत् |
| ,, | १५ | कतिपया | २१ कतिपया |
| २६ | २ | संबदति | संवदति |
| ,, | ,, | त्तनस्थे | त्तनस्थेन |
| ,, | १० | स्माक | स्माकं |
| ,, | ११ | गोता | गीता |
| ,, | २३ | अभिनव | २२ अभिनव |

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २७ | २ | ऽतोय | तीव |
| ,, | ३ | टीका | टीका। |
| ,, | ५ | क्षत्र समा | क्षत्रसमा |
| ,, | ६ | मामका | मामकाः |
| ,, | ७ | कुरुणां | कुरूणां |
| २८ | १५ | कर्भो | कर्मो |
| ,, | २० | धोत | धीत |
| ,, | २१ | पाठा | पाठाः |
| २९ | १ | कथमभि | २३ कथमभि |
| ,, | २४ | ब्रूवाणा | ब्रुवाणा |
| ३० | ७ | नोज्ज्ञति | नोज्झति |
| ,, | ९ | शुद्धधर्म | २४ शुद्धधर्म |
| ,, | २० | सूत्रादिमन्ति युक्ताः | सूत्रादि भवितुं युक्तम् |
| ,, | २२ | स्वोकृतम् | स्वीकृतम् |
| ३१ | ४ | गातायां | गीतायां |
| ,, | ६ | बहोकान् | बाह्लीकान् |
| ,, | १२ | भाष्म | भीष्म |
| ,, | १३ | कृष्णोक्ता | कृष्णोक्ताः |
| ,, | १६ | प्रचलितगोता थ | प्रचलितगीताऽध्या |
| ३२ | १ | मण्लीय | मण्डलीय |
| ,, | ,, | गोताया | गीताया |

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३२ | २ | द्धृत्यय पू | द्धृत्य पू |
| ,, | ३ | स्तेपां | स्तेषां |
| ,, | २३ | बलियसा | बलियसा |
| ३५ | २ | तादृंशि | तादृंशि |
| ३६ | २ | मिप्यन् | मिष्यन् |
| ,, | १९ | तामाप | तामाप। |
| ,, | २४ | बलियसा | बलीयसा |
| ३७ | २ | नूनम नोत् | नूनमजानोत् |
| ,, | १४ | विदधाति | विदधति |
| ,, | १९ | प्रमाणो | प्रमाणी |
| ३८ | ८ | युध्धे | युद्धे |
| ,, | १४ | वोरा | वीरा |
| ,, | २४ | जागृति | जाग्रति |
| ३९ | ५ | यद्यद्धे | यद्युद्धे |
| ,, | ७ | दुखसुख | दुःखसुख |
| ,, | ९ | भाविदुःखं | भावि दुःखं |
| ४० | ९ | घायोति | घायीति |
| ,, | १० | गाता | गीता |
| ,, | १० | गातोप | गीतोप |
| ,, | १२ | व्यासे कृष्णार्जन | व्यासः कृष्णार्जुन |
| ,, | १६ | विद्यमा मपि | विद्यमानामपि |
| ,, | १९ | प्रमाणा | प्रमाणी |

| पृष्ठांकः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ४० | २२ | रणक्षेत्र | रणक्षेत्रे |
| ४१ | १२ | घोपदे | वेपदे |
| ४२ | १३ | दशविंशति | दश विंशतिं |
| ,, | १८ | विधा तिल | विधास्तिल |
| ४३ | ७४५ | मित | ७४५ श्लोकमित |
| ४४ | ११ | स्माभिः | स्माभिः । |
| ,, | ११ | तथा कृते | तथाऽकृते |
| ,, | १३ | संभवीबभूव | संभवी बभूव |
| ,, | २० | पक्रमो | पक्रमो |
| ४५ | २१ | तथैव श्रीकृ | तथैवं न श्रीकृ |
| ४६ | ७ | पाण्डित्य प्रद | पाण्डित्यप्रद |
| ,, | १५ | संवादो केवलं | संवादो न केवलं |
| ,, | १७ | निश्चिनुमः | निश्चिनुमः । |
| ४८ | १ | विशाद | विषाद |
| ४९ | ५ | देशयिभा | देशविभा |
| ,, | ७ | र्बाहिके | र्बाहीके |
| ,, | ३ | विद्व | विद्व |
| ,, | १२ | विद्वदा | विद्वदा |
| ,, | १४ | विद्वत्तमा | विद्वत्तमा |
| ,, | १८ | विद्वां | विद्वां |
| ,, | २१ | विद्व | विद्व |
| ५० | १ | देशेः | देशे |

# Errata

## (Preface)

| Page No. | Line | Incorrect | Correct |
|---|---|---|---|
| 30 | 20 | Dharma- shashtra | (Dharma shastra) |
| 33 | 1 | 745 | 755 |
| ,, | 8 | 745 | 755 |
| 34 | 4 | 745 | 755 |
| 35 | 3 | Padies | Lines |
| ,, | 5 | ,, | ,, |
| ,, | 7 | ,, | ,, |
| ,, | 9 | ,, | ,, |
| 44 | 17 | Anushasana, shanti and Bhishma These | Anushasana ana shanti These |
| 59 | 14 | these unforeseen circumstances, | these circumstances, |
| 74 | 5 | languages. | languages. |
| | 6 | The same was | Parallel was |

# रसशाला औषधाश्रम गोंडल–काठियावाड.

## सरस्वती भाण्डारः

### अतिदुर्लभानि विक्रेयपुस्तकानि

# ॥ दशरूपकम् ॥

। श्री धनञ्जयकृतधनिककृतावलोकसहितम् ।

॥ संस्कृताङ्ग्लभाषाव्याख्यया समलंकृतं

( प्रथमः प्रकाशः ११२ पृष्ठानि )

। मूल्यं पंच रूपकाणि Rs. 5 only ।

भारतीयानामार्याणां नाट्यशास्त्रं न केवलमतीव प्राचीनं किन्तु यदाऽन्येषु देशेषु मानुषता पशुतायाः स्तोकमेवाभिधत तदापि –भारतेऽत्रार्या सर्वा एव नाट्यकलाः सर्वांश्च नाटकादि ( रूपक ) नियमानजानन् प्रादुर्भावयंश्च । अस्य शास्त्रस्यास्याः कलायाश्च मूलं तथैव वेदे वर्तते यथाऽन्येषां शास्त्राणां विज्ञानानां च । अन्यानि शास्त्राण्यन्याश्च कला अधिकृत्य यथा बहवो ग्रन्था आर्षाः पूर्वमत्रा-सन्सन्ति च सम्प्रति तथैवास्य शास्त्रस्य-बहवो ग्रन्था आसन् । सम्प्रति श्रीभरतमुनिप्रणीतं नाट्यशास्त्रं विहाय सर्व एव ते प्रायो नामशेषाः सन्ति । मुनिना भरतेन तु नाट्यादीनां ये यावन्तश्च भेदा दर्शितास्ते तावन्तश्च सम्प्रत्यपि कस्मिन्नपि वाङमये न वर्तन्ते ।

द्धिप्रदा आश्चर्यकरा. परःशताः प्रयोगा ग्रन्थेऽस्मिन्विद्यंते । बहवो वादिनो यद्ग्रन्थलब्धये यतन्ते स्म स एवाद्यावधि न कस्यापि हस्तंगतो दुर्लभोऽयं ग्रन्थो महतायासेन बहुधनव्ययेन चास्माभिरवाप्तः । वादिनां धनार्थिनां सुवर्णादिसिद्धिसाधनोत्सुकानां हितार्थं प्रसिद्धिं नीतः ।

# श्री भगवद्गीता

## ( मूल्यं दशरूपकाः Rs. 10 only )

आंग्लपरिचयः ( Introduction ) २८ पृष्ठेषु । राजवैद्यकृत सिद्धिदात्यभिधा पाठभेदानां प्रतिपादयित्री आंग्लटिप्पणी १५३ पृष्ठेषु । संपूर्णा मूलमात्रा श्रीभगवद्गोता प्राचोनपाठानुसृता ७७ पृष्ठेषु । राजवैद्य जो. का. शास्त्रिकृतचंद्रघंटाख्यविस्तृतसंस्कृतटोकया तस्याश्चांग्लभाषांतरेण युताः प्रथमतस्त्रयोऽध्यायाः ११३ पृष्ठेषु । दृढपट्टबद्धा सुवर्णाक्षरांकिता । प्रसिद्धिंगतयाऽनया विश्वविद्वत्सु गीताशास्त्ररसज्ञेषु महान्क्षोभः समजनि मतमतान्तरसंप्रदायदुराग्रहविरहेण रचितेयं टीका टिप्पणी च प्राचीनपाठादिभिर्मोदयते मनांसि मनीषिणाम् ।

। श्री यशोधरविरचितः ।

# ॥ रसप्रकाश सुधाकरः ॥

राजवैद्यैः जीवरामकालिदासशास्त्रिभिर्हस्तलिखितानेक-पुस्तकपाठैः संगमय्य संशोधितस्तैश्च कृतयैव विस्तृतया गुर्जरभाषाटीकया सुबोधतां नीतः समूलः ।

( मूल्यं ४ रूपकाः Rs. 4 only. )

विंशत्यध्यायात्मके ग्रन्थेऽस्मिन् रसस्याष्टादशसंस्कारा धातूपधातु-रसोपरसादीनामनेक भस्म-रस-रसायन-गुटी चूर्णादीनि सिद्धौषधानि, यंत्रपुटकोष्ठीमूषादिविधानानि स्वर्णरौप्यमुक्तादीनां धातुवादप्रयोगाः, सद्यःफलानि रसायनवाजीकरौषधानि, इत्याद्या विषयाः सम्यग्वर्णितास्ते च भिषजां सुखाजीविकासाधनभूताः । रसायनशास्त्रे परं प्रमाणभूतोऽयं ग्रन्थः द्विशतमितपुष्टपत्रविस्तारो दृढावरणो भिषग्भिः स्वपुस्तक संग्रहेऽवश्यं निधातव्यः ।

॥ प्राचीनहस्तलिखितपुस्तकाधारेण मुद्यते ॥

# ॥ श्री सप्तशती दुर्गापाठः ॥

। षोडशांगः—चंडीपाठः ।

( राजवैद्य जी. का. शास्त्रिभिः संशोधितः संवर्धितश्च
पूर्ण ७०० मंत्रात्मकः )

( मूल्यं षोडशरूपकाः Rs. 16 only )

इहामुत्र मंगलसाधनहेतुः सर्ववर्णाश्रमजनैरुपास्यमानो मंत्रशास्त्रे वरीयानयं ग्रन्थः । अद्यावधि उवाचेत्यादिभिः श्लोकार्धैश्च ७०० श्लोकाः पूर्यन्ते परमस्माकमयं ग्रन्थः सप्तशत सङ्ख्यैःश्लोकैः पूर्णो दुर्लभश्च । नवचंडीशतचंडीविध्युपासनाक्रमपूजापद्धतिदीपदानादिभिः गुरूपदिष्टरहस्यैर्नानाविधसिद्धकाम्यप्रयोगैरनेकविषयैरलंकृतश्च ।

# यज्ञनाटकम्

## ( महाकवि श्री भासकृतम् )

सहृदया नाटकरसिकाश्च महताऽऽनन्देन प्रवृत्तिमिमां श्रोष्यन्ति यदस्माकं सरस्वती भांडारसंज्ञके हस्तलिखितपुस्तकसङ्ग्रहे पुस्तकद्वयमस्माभिरलम्भि । तच्च देवनागरलिप्यां वर्तेते । तयोरेकं तु भासकृतमेव "स्वप्नवासवदत्त" नाम्ना प्रसिद्धम् । किन्तु—अनन्तशयनग्रन्थप्रसिद्धं श्री स्वर्गत महामहोपाध्यायगणपतिशास्त्रिभिर्यल्लब्धमासीत्ततो विस्तृततरवस्तुतो महाकविभासकृतं भाति अपरं च पुस्तकं 'यज्ञनाटक' मिति तस्य नाम तत्र विद्यते । तदपि भासकृतमेवास्तीति नास्ति संशयलेशोपि । यतः (१) उपक्रमावसानौ भासनाटकवद्वर्तेते ।

(२) भाषासरणिरपि भासग्रन्थानामिवैव (३) अलङ्कारग्रन्थेषु भासनाम्नोद्धृतानि कतिपयवाक्यानि तत्र वर्तन्ते (४) अथ च कविधुर्येण भासेन रामायणमधिकृत्य प्रतिमाभिषेकयोर्यावती कथोपनिबद्धा सा श्रीरामस्य बालचरितमनिबध्वा पूर्णतां न याति अस्मिंश्च रामजन्मनः सीताविवाहान्तं चरितं विद्यत इति पूर्णतां याति रामायणकथा महाकविना भासेनोपनिबद्धा ।

अथ चानेन ग्रन्थेन ग्रन्थकर्तुः समयादिनिर्णयः सुकरतरः । यस्मात् (क) अस्य निर्माणकाले राजधर्मज्ञानाय वासिष्ठं धर्मशास्त्रं लब्धमानमासीत् । (ख) बार्हस्पत्यमर्थशास्त्रं प्रसिद्धमासीत् । (ग) व्यवहारपदानि चतुर्विंशतिरासन् ( न मन्वादि लब्धान्यष्टादश ) (घ) सूत्रसंङ्ग्रहग्रन्थौ व्याकरणस्यास्तां न महाभाष्यमवर्त्तत (ङ) मेधातिथिकृतं न्यायशास्त्रं कासकृत्स्नी च मीमांसा प्रसिद्धाऽऽसीत् । किं बहुना पाठकाः पुस्तकं दृष्ट्वा स्वयमेव सर्वमेतज्ज्ञास्यन्ति । मूलमात्रस्य सटिप्पणस्यास्य पुस्तकस्य मूल्यं रूपकपंचकम् ।

## व्याधिनिग्रहः प्रशस्तौषधसंग्रहश्च

( मूल्यं सपादरूपकः Re. 1–4–0 only )

मूलमात्रौ प्राचीनहस्तलिखितपुस्तकाधारेण मुद्रितौ राजवैद्य जी. का. शास्त्रिकृतटिप्पणीसनाथौ संशोधितौ सर्वरोगप्रशमनकरैः सरलैर्वनौषधीनां नूत्नप्रयोगैः संभृतौ एकपट्टबद्धौ नितरामाश्चर्यकरचिकित्साक्रमौ सरलरसिकसंस्कृतपद्यमयावश्यं संग्राह्यौ भिषग्भिः ।

# Hint

## ॥ संकेतः ॥

भोजपत्रपाठानुसारं पाठभेदावतरणेऽयं संकेतः

अंकात्पूर्वं पाणिकाद्वयेन तच्छ्लोकस्य प्रथम पद्ये ( पूर्वार्ध-श्लोके ) पाठभेदोस्तीति ज्ञेयम् यथा च-॥ १

अंकात्पूर्वं पश्चाच्च पाणिकाद्वयं द्वितीयपद्ये ( उत्तरार्ध-श्लोके ) पाठभेदं दर्शयति यथा-॥ १ ॥

The two short lines before the figure–such as ॥ १ indicate that the variant is in the first Padya or part of the verse–Shloka.

The two lines both before and after the figure–such as ॥ १ ॥ show that the variant lies in the Uttarardha or the latter Padya of the verse–Shloka.

# भोजपत्रलिखितगीतायां

## पाठभेदा अधिकश्लोकाश्च

## ॥ अथ प्रथमोऽध्यायः १ ॥

॥ भोजपत्रगीतानुसारं पाठः ॥

| | भोजपत्र-गीताश्लोकांकाः ॥, | प्रचलित-गीताश्लोकांकाः |
|---|---|---|
| ............ सर्वक्षत्रसमागमे | ॥ १ | ॥ १ |
| पश्यतां............ | ॥ ३ | ॥ ३ |
| ............ महारथः | ॥ ४ ॥ | ॥ ४ ॥ |
| ............ काशिराजश्च...... | ॥ ५ | ॥ ५ |
| ............ कृपः शल्यो जयद्रथः ॥ | | |
| ............ सोमदत्तिश्च वीर्यवान् | ॥ ८ ॥ | |
| ............ नानायुद्ध...... | ॥ ९ ॥ | ॥ ९ ॥ |
| अयनेषु तु...... | ॥ ११ | ॥ ११ |
| पांचालश्च महेष्वासो द्रौपदेयाश्च पंच च | ॥ १८ ॥ (अधिकं) | |

(२१ श्लोकारंभे अर्जुन उवाचेति नास्ति)

| | | |
|---|---|---|
| उभयोः सेनयो ............ | ॥ २१ ॥ | ॥ २१ ॥ |
| धृतराष्ट्रस्य ............ | ॥ २३ ॥ | ॥ २३ ॥ |

(२४ श्लोकारंभे संजय उवाचेति नास्ति)

| | | |
|---|---|---|
| उभयोः सेनयो............ | ॥ २४ ॥ | ॥ २४ ॥ |

| | भो. गी. श्लो., | प्र. गी. श्लो. |
|---|---|---|
| ............ सीदमानोऽब्रवीदिदम् | ॥ २७ ॥ | ॥ २७ ॥ |
| ( २८ श्लोकारंभे अर्जुन उवाचेति नास्ति ) | | |
| दृष्ट्वेमान्स्वजनान् कृष्ण युयुत्सून्समवस्थितान् | ॥ २८ | ॥ २८ |
| ............ हत्वाहवे स्वबान्धवान् | ॥ ३१ | ॥ ३१ |
| ............ न राज्यं न सुखानि च | ॥ ३१ ॥ | ॥ ३२ |
| त एवेमे स्थिता योद्धुं प्राणांस्त्यक्त्वा सुदुस्त्यजान् | ॥ ३३ | ॥ ३३ ॥ |
| स्वजनान हि............ | ॥ ३६ ॥ | ॥ ३७ ॥ |
| ............ संपश्यद्भिर्ज...... | ॥ ३८ ॥ | ॥ ३९ ॥ |
| ............ स्वजनान्हन्तुमुद्यताः | ॥ ४४ ॥ | ॥ ४५ ॥ |
| ( ४८ श्लोकारंभे संजय उवाचेति नास्ति ) | | |
| एवमुक्त्वार्जुनः संख्ये शोकसंविग्नमानसः ॥ | | |
| उत्सृज्य सशरं चापं रथोपस्थ उपाविशत् | ॥ ४६ ॥ | ॥ ४७ ॥ |

---

## ॥ अथ द्वितीयोध्यायः २ ॥

### ॥ भोजपत्रगीतानुसारं पाठः ॥

| | भोजपत्र- गीताश्लोकांकाः ॥, | प्रचलित- गीताश्लोकांकाः |
|---|---|---|
| सीदमानमिदं वाक्य............ | ॥ १ ॥ | ॥ १ ॥ |
| मा क्लैब्यं गच्छ कौन्तेय............ | ॥ ३ | ॥ ३ |

| | भो.गी श्लो., | प्र.गी.श्लो. |
|---|---|---|
| ............ | । | |
| श्रेयस्करं भैक्ष्य............ | ॥ | |
| न त्वर्थकामांस्तु गुरून्निहत्य............ | । | |
| ............ | ॥ ५ ॥ | ॥ ५ ॥ |
| ............ | । | |
| स्ते नः स्थिताः ............ | ॥ ६ ॥ | ॥ ६ ॥ |
| यः शोक ............ | ॥ ८ | ॥ ८ |
| ............ सीदमानमिदं वचः | ॥ १० ॥ | ॥ १० ॥ |

त्वं मानुष्येणोपहतांतरात्मा
विषादमोहाभिभवाद्विसंज्ञः ॥
कृपागृहीतः समवेक्ष्य बन्धू-
नभिप्रपन्नान्मुखमन्तकस्य ॥ ११ ॥

| | | |
|---|---|---|
| अशोच्याननुशोचस्त्वं प्राज्ञवन्नाभिभाषसे | ॥ १२ | ॥ ११ |
| न ह्येवाहं..................न त्वं नामी............॥ | | |
| ............ मितःपरम् | ॥ १३ ॥ | ॥ १२ ॥ |

आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा ॥
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ १९ ॥ (अधिकः)

| | | |
|---|---|---|
| ............ हन्यते हन्ति वा कथम् | ॥ २३ ॥ | ॥ २१ ॥ |
| अथचैनं............ | ॥ २८ | ॥ २६ |
| जातस्य हि ध्रुवं............ | ॥ २९ | ॥ २७ |
| नात्र शोचितु............ | ॥ ३२ ॥ | ॥ ३० ॥ |
| एषां च त्वं............ | ॥ ३७ ॥ | ॥ ३५ ॥ |

| | भो.गी.श्लो., | प्र गी.श्लो. |
|---|---|---|
| नेहातिक्रम·····················.···न दृश्यते | ॥ ४२ | ॥ ४० |
| ·········· बुद्धिरेकैव········ | ॥ ४३ ॥ | ॥ ४१ ॥ |
| वेदवादपराः ············ | ॥ ४४ ॥ | ॥ ४२ ॥ |
| ············ जन्मकर्मफलेऽस्वः ॥ | | |
| ············ श्वर्यगतीः प्रति | ॥ ४५ ॥ | ॥ ४३ ॥ |
| कर्मण्यस्त्वधिकारस्ते············ | ॥ ४९ | ॥ ४७ |
| यस्य सर्वे समारंभा निराशीर्बन्धनास्विह ॥ | | |
| त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५१ ॥ अधिकः | | |
| ·········जहातीमे············ | ॥ ५३ | ॥ ५० |
| कर्मबन्ध············ | ॥ ५४ ॥ | ॥ ५१ ॥ |
| स्थिरप्रज्ञस्य············ | ॥ | |
| स्थिरधीः ··········· | ॥ ५७ ॥ | ॥ ५४ ॥ |
| ············ स्थिरप्रज्ञस्तदो······ | ॥ ५८ ॥ | ॥ ५५ ॥ |
| ············ स्थिरधीर्मुनि······ | ॥ ५९ ॥ | ॥ ५६ ॥ |
| ············ स्थिरप्रज्ञस्तदोच्यते | ॥ ६० ॥ | ॥ ५७ ॥ |
| ············ स्थिरप्रज्ञस्तदोच्यते | ॥ ६१ ॥ | ॥ ५८ ॥ |
| यत्तस्यापि हि·········· | ॥ ६३ | ॥ ६० |
| तानि संयम्य मनसा············ | ॥ | |
| ············ स्थिरप्रज्ञः स उच्यते | ॥ ६४ ॥ | ॥ ६१ ॥ |
| रागद्वेषविमुक्तस्तु··········· | ॥ ६७ | ॥ ६४ |
| ············ स्थिरप्रज्ञा च सा स्मृता | ॥ ७१ ॥ | ॥ ६८ ॥ |
| यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥ | | |

भो.गी.श्लो., प्र.गी.श्लो.

विजानतामविज्ञातं विज्ञातमविजानतां ॥ ७४ ॥ (षडधिकश्लोकाः)
प्रतिबोधेन तद्ब्रह्म विदित्वा लभतेऽमृतं ॥
ब्रह्म लब्ध्वा नैव किंचिल्लब्धव्यमवशिष्यते ॥ ७५ ॥
ब्रह्मज्ञानं ब्रह्मलाभ एकमेव द्विधोदितम् ॥
ज्ञात्वा लब्ध्वाऽथवा ह्येतत् शांतिमाप्नोति शाश्वतीम् ॥ ७६ ॥
यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः ॥
स भवत्यमृतो मर्त्यो ब्रह्म चात्र समश्नुते ॥ ७८ ॥
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ॥
स भवत्यमृतो मर्त्य एतावदनुशासनम् ॥ ७९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥
क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८० ॥

——[ ० ]——

# ॥ अथ तृतीयोऽध्यायः ॥

## ॥ भोजपत्रगीतानुसारं पाठः ॥

| | भोजपत्र-गीताश्लोकांकाः ॥, | प्रचलित-गीताश्लोकांकाः |
|---|---|---|
| इष्टान्कामान्हि वो……….. | | ॥ |
| तैर्दत्ता न प्रदायैभ्यो……….. | ॥ १२ ॥ | ॥ १२ ॥ |
| ……….. प्रवर्तेथ च कर्मणि | ॥ २२ ॥ | ॥ २२ ॥ |
| मम वर्त्मानुवर्तेरन्……….. | ॥ २३ ॥ | ॥ २३ ॥ |
| ……….. भागशः | ॥ २७ | ॥ २७ |

भो.गी.श्लो, प्र.गी.श्लौ.

............ मनुवर्तन्ति मानवाः ॥

............ मुच्यंते सर्वकिल्बिषैः ॥ ३१ ॥ ॥ ३१ ॥

............ विनिष्टान् विद्धयचेतसः ॥ ३२ ॥ ॥ ३२ ॥

............ परधर्मोदयादपि ॥ ३५ ॥ ॥ ३५ ॥

अनिच्छमानोपि बलादाक्रस्येव नियोजितः ॥ ३६ ॥ ॥ ३६ ॥

भवत्येष कथं कृष्ण कथं चैव विवर्धते ॥ पंचाधिक

किमात्मा कः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥ ३७ ॥ श्लोकाः

श्रीभगवानुवाच

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह ॥

सुखतंत्र इवासीनो मोहयन् पार्थ तिष्ठति ॥ ३८ ॥

कामक्रोधमयो घोरः स्तंभहर्षसमुद्भवः ॥

अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ३९ ॥

हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ॥

भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४० ॥

स एव कलुषः क्षुद्रच्छिद्रप्रेक्षी धनंजय ॥

रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४१ ॥

............ तथा तेनायमावृतः ॥ ४३ ॥ ॥ ३८ ॥

............ ज्ञानमावृत्य देहिनां ॥ ४५ ॥ ॥ ४० ॥

इन्द्रियेभ्यः परं चेतः चेतसः सत्त्वमुत्तमम् ॥ अधिक

सत्त्वादथ महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ४६ ॥ श्लोकौ

अव्यक्तात्तु परं ब्रह्म व्यापकं चाप्यलिंगकम् ॥

यज्ज्ञात्वा मुच्यते जीवो ह्यमृतत्वं च गच्छति ॥ ४७ ॥

——[ * ]——

# ॥ अथ चतुर्थोऽध्यायः ॥

## ॥ भोजपत्रगीतानुसारं पाठः ॥

| | भोजपत्र-गीता श्लोकांकाः ॥, | प्रचलित-गीता श्लोकांकाः |
|---|---|---|
| एवं विवस्वते………… | ॥ १ | ॥ १ |
| ………… मद्व्यपाश्रिताः | ॥ १० | ॥ १० |
| ………… भागतः | ॥ १३ | ॥ १३ |
| ………… न मे कामः फलेष्वपि | ॥ १४ | ॥ १४ |
| कर्मणोपि हि………… | ॥ १७ | ॥ १७ |
| ………… यः पश्यत्यकर्मणि…… | ॥ १८ | ॥ १८ |
| यज्ञायारभतः………… | ॥ २३ ॥ | ॥ २३ ॥ |

अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥
ब्रह्मविद् ग्रसति ग्रासान् सर्वं ब्रह्मात्मनैव हि ॥ २४ ॥ ( अधिकः )

| | | |
|---|---|---|
| ………… समुपासते | ॥ २६ | ॥ २५ |
| ………परं शान्ति………… | ॥ ३९ ॥ | ॥ ३९ ॥ |

यथा रविः सर्वरसान्प्रभुंक्ते
हुताशनश्चापि हि सर्वभक्षः ॥
तथैव योगी विषयान्प्रभुंक्ते
न लिप्यते पुण्यपापैश्च शुद्धः ॥ ४२ ॥ ( अधिकः )

| | | |
|---|---|---|
| छित्वैवं………… | ॥ ४३ ॥ | ॥ ४२ ॥ |

—— * ——

# ॥ अथ पंचमोऽध्यायः ५ ॥

## ॥ भोजपत्रगीता पाठः ॥

| भोजपत्रगीतानुसारं पाठः | भोजपत्रगीता श्लोकांकाः, | प्रचलितगीता श्लोकांकाः |
|---|---|---|
| ...... विनिश्चितम् | ॥ १ ॥ | ॥ १ ॥ |
| ...... बन्धाद्विमुच्यते | ॥ ३ ॥ | ॥ ३ ॥ |
| ...... सम्यगुभयोः फलमश्नुते | ॥ ४ ॥ | ॥ ४ ॥ |
| ........ | | |
| प्रलपन्विलपन्........ | ॥ ९ | ॥ ९ |
| | | ...... |
| ...... त्मसिद्धये | ॥ ११ ॥ | ॥ ११ ॥ |
| स्मरन्तोपि मुहुस्त्वेतत्स्पृशंतोपि स्वकर्मणि ॥ | | ...... |
| सक्ता अपि न सज्जन्ति पंके रविकरा इव | ॥ १८ ॥ | (अधिकः) |
| ...... त्मनि यः सुखम् ॥ | | ...... |
| ...... सुखमव्ययमश्नुते | ॥ २२ ॥ | ॥ २१ ॥ |
| ये हि संसर्गजा......... | ॥ २३ | ॥ २२ |
| ...... सुखी मतः | ॥ २४ ॥ | ॥ २२ ॥ |
| अन्तः सुखो.................... | ॥ | |
| स योगी परमं योगं......... | ॥ २५ ॥ | ॥ २४ ॥ |
| ...... भयद्वेषो ...... | ॥ २९ ॥ | ॥ २८ ॥ |

# ॥ अथ षष्ठोध्यायः ६ ॥

## ॥ भोजपत्रगीता पाठः ॥

| भोजपत्रगीतानुसारं पाठः | भोजपत्रगीता श्लोकांकाः, | प्रचलितगीता श्लोकांकाः |
|---|---|---|
| ...... परात्मसु समा मतिः | ॥ ७ | ॥ ७ |
| समकायशिरोग्रीवं धारयन्नचलः स्थिरः | ॥ | ...... |
| संपश्यन्नासिकाग्रं........... | ॥ १३ ॥ | ॥ १३ ॥ |
| ...... मद्भक्तो नान्यमानसः | ॥ १५ | ॥ १५ |
| योगोस्ति नैवात्यशतो.......... | ॥ | ...... |
| ...... नातिजागरतोर्जुन | ॥ १६ ॥ | ॥ १६ ॥ |
| ...... योगमात्मनि | ॥ १९ ॥ | ॥ १९ ॥ |
| ...... योगसेवनात् | ॥ २० | ॥ २० |
| ...... श्च्यवति तत्त्वतः | ॥ २१ ॥ | ॥ २१ ॥ |
| ...... योगो निर्विण्णचेतसा | ॥ २३ ॥ | ॥ २३ ॥ |
| ...... योगी नियतमानसः ॥ | | ...... |
| सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति | ॥ २८ ॥ | ॥ २८ ॥ |

स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमः स्मृतः ॥
स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः ॥ २९ ॥
स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ॥
ज्ञात्वा तं मृत्युमत्येति नान्यः पंथा विमुक्तये ॥ ३० ॥ अधिकौ
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि (प्रचलितगीतायाः)
सं पश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ ३१ ॥ (अधिकंपद्यं)
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ (प्रचलितगीतायाः)

| भोजपत्रगीतानुसारं पाठः | भो. गी. श्लो | प्र. गी. श्लो. |
|---|---|---|
| आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ॥ | | ...... |
| ज्ञाननिर्मथनाभ्यासात्पापं दहति पूरुषः | ॥ ३२ ॥ | (अधिकः) |
| यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ॥ | | |
| सर्वभूतेषु चात्मानं ततो न विजुगुप्सते | ॥ ३४ ॥ | (अधिकः)... |
| अयतः...... | ॥ ४१ | ॥ ३७... |
| लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ | | ...... |
| अनेकचित्तोऽविभ्रांतो मोहस्यैव वशंगतः | ॥ ४२ ॥ | (अधिकः) |
| ...... छिन्नाभ्र इव नश्यति ॥ | | |
| ...... विनाशं वाधिगच्छति | ॥ ४३ ॥ | ॥ ३८ ॥ |
| ...... जातु गच्छति | ॥ ४५ ॥ | ॥ ४० ॥ |
| प्राप्य पुण्यकृतांल्लोका...... | ॥ ४६ | ॥ ४१ |
| ...... जायते धीमतां कुले | ॥ ४७ | ॥ ४२ |
| ...... पौर्वदेहिकम् ॥ | | |
| ततो भूयोपि यतते सिद्धये...... | ॥ ४८ ॥ | ॥ ४३ ॥ |
| ...... ह्यवशोपि सन् | ॥ ४९ | ॥ ४४ |
| ...... ज्ञानिभ्यश्च...... | ॥ ५१ | ॥ ४६ |

## ॥ अथ सप्तमोध्यायः ७ ॥

### ॥ भोजपत्रगीतापाठः ॥

| भोजपत्रगीतानुसारं पाठः | भोजपत्रगीता श्लोकांकाः | प्रचलितगीता श्लोकांकाः |
|---|---|---|
| ...... मदाश्रितः | ॥ १ | ॥ १ |
| यज्ज्ञात्वा न पुनः किंचिज्ज...... | ॥ २ ॥ | ॥ २ ॥ |

